९,४८; –लाम् या १,२०†.
अफल-त्व- -त्वात् मीसू ११,१,३५.
अ-फल-युक्त[a]- -क्ताः काश्रौ १,२,४.
अ-फलीकृत[b]- -तान् मागृ २,१४,२८; –तानाम् आपश्रौ १५, ५, २०; भाश्रौ ११, ५, २४; हिश्रौ २४, २,६; –तानि वैश्रौ १३,७:२१.
अ-फलिन्[b]- -ली शंध ३७८.
अ-फाल-कृष्ट[a]- -ष्टेन विध ९४,५.
अ-फे( न> )ना[c]- -नाभिः वाध ३, ३१; शंध ५६.
अ-फेना( न-अ )वस्राव[d]- -वम् वैगृ १,२:५.
अ-फेनिला[b]- -लाभिः विध ६२,५.
√अब् पाधा. भ्वा. आत्म. शब्दे.
†अ-बद्ध- -द्धम्[e] काश्रौ २५,११,२५; आपश्रौ १०, १५, ७; बौश्रौ ६, ६ : २१; ९, १९ : ४७; १४, १ : ११; भाश्रौ १०,८,५; वैश्रौ १२,११ : ८; २१,१ : ४; हिश्रौ १०, २, २४; आग्निगृ १,२, ३ : १९; बौगृ ३,४,२६; बौध १,७, ३१; ३,८,२१.
†अ-बधिर[f]- -रः भाशि ५२; –रम् कौगृ १, २०, ६; –राः आपश्रौ ५,१,७.
अ-बन्ध[c]- -न्धः या १४,१०.
अबन्धक[g]- पाग २,४,६९.
अ-बन्धु[f]- -न्धवः वाधूश्रौ ४, १८ : २५;२९.
†अ-बन्धु-कृत्[f]- -कृत् कौसू ३९,७; अप ३२,१,२; अपं २ : ३५.
अ-बन्ध्य- -न्ध्यः गौध ८,१२.
अ-बन्ध्र[f]- -न्ध्रः वाश्रौ १, ६, ५, १०†.
अब्-अर्थ- √*अप् द्र.
अ-बर्हिस्[c]- -र्हिःषु कप्र ३,८,२.
†अ-बल,ला[f]- पाग ६,३,३४[h]; –लः कागृ २, ४; मागृ १, २, ६; वागृ ६, ३०; लम् अप ७१, १९,१; –ला सु १०,४;–लान् लाश्रौ ९, १, १४; दंवि १, ६; –लानाम् लाश्रौ ९, ३, १६; –लाम् या ६, ३१; –लेन कौगृ ५,३,२४; आग्निगृ ३, ६, १ : ८; २६; ३ : ३३; ८, ३ : ३९; बौपि १, २ : ८; ८ : ८; ९ : ३; १६ : २४; हिपि ७ : ६; दंवि १,७.
अबल-धन्वन्- -न्वा दंवि १,६†.
अ-बलीयस्[b]- -यः वाश्रौ ३,२, ६, ३०.
अ-बहिर्-जानु[i]- -नु वैगृ १,२ : ५.
अ-बहिष्कार्य[b]- -र्यः गौध ८, १२.
अ-बहु[j]- -हुपु आश्रौ १,२, २४; पावा २,४,६२[२].
अबहु-त्व- -त्वे पावा २,४,६२.
अ-बहु-गण[k]- -णात् पा ५,४,७३.
अ-बहु-पाद[i]- -दम् आपध २, ६, ७; हिध २,२,८?[m].
अ-बहुभाषिन्[b]- -षी आश्रौ १,१२, ३०.
अ-बहुवत्[j] बृदे ३,८२.
अ-बहुवादिन्[b]- -दिनः द्राश्रौ ९,२, ७; लाश्रौ ३,६, ७; –दी गोगृ १, ५,२५.
अ-बहुब्रीह्यर्थ[j]- -र्थम् पावा ६, २, १८६.
अ-बहुब्रीह्य(हि-अ)शीति[n]- -त्योः पा ६,३,४७.
अ-बह्व(हु-अ)क्षर[j]- -रेण ऋप्रा ५,५.
अ—बहु-नञ्-सु-काल-सुखादि-पूर्व[o]- -र्वात् पावा ४,१,५२.
अ-बाध्य- -ध्यः अप ३६,२७,१.
अ-बान्धव[c]- -वः शंध ३०२.
अ-बा(ल> )ला[p]- -लाम् वागृ १४, १[q].
अ-बालिश[r]- -शान् या ९ १०.
†अ-बिभीवस्- -भ्युषा या ४, १२ϕ[s].
†अ-बिभ्रत्- -भ्रत् आपमं १,९,१०; हिगृ १,१८,५.
अ-बीजिन्[b]- -जी शंध ३७८[२].
अब्-ईष्टका -,अब्-उक्ता- √*अप् द्र.
†अ-बुद्ध- -द्धम् वाश्रौ १,३,७,२०.
अ-बुद्धि[c]- -द्धिभिः पाशि २.
अ-बुद्धि-पूर्व[i]- -र्वम् आपध २, २६, १८; हिध २,५,२१३.
अ-बुद्बु(द> )दा[c]- -दाभिः वाध ३, ३१; शंध ५६; ४५९.
अ-बुध[t]->आबुध्य- पा ५,१,१२१.
अ-बोधन[j]- -ने पा २, ४,४६.
अब्-घट-, अब्ज- प्रमृ. √*अप् द्र.
१अ-ब्रह्मचर्य[j]- -र्यम् आपश्रौ १५,

*a*) विप. । तस.>तृस. । *b*) विप. । तस. । *c*) विप. । बस. । *d*) विप. । बस.>षस. । *e*) पाभे. वैप १ परि. तै ३, १,१,२ टि. द्र. । *f*) वैप १ परि. च द्र. । *g*) व्यप. । व्यु.? । *h*) तु. पासि. । *i*) विप. । तस. उप. बस. । *j*) तस. । *k*) विप. । बस. > द्वस. । *l*) विप. । बस. >कस. । *m*) बहु° इति पाठः? यनि. शोधः ( तु.आपध. ) । *n*) तस. > द्वस. । *o*) विप. । तस. । उप. द्वस.>बस. । *p*) व्यप. । वैप १,२९६ q टि. द्र. । *q*) पाभे. वैप १ परि. अपालाम् ऋ ८,९१,७ टि. द्र. । *r*) विप. ([अमन्द-] स्तोम- ) । तस. । *s*) पाभे. वैप १ परि. द्र. । *t*) तु. भाण्डा. प्रमृ.; वैतु. पासि. अ-बुध->आबुध्य- इति ।

२१, ७; भाश्रौ ११, २२, ९; –र्यात् शांश्रौ १६,१,१५;१०,९.
२अ-ब्रह्मचर्य[a]- -र्याः या ४,१९.
अ-ब्रह्मचारिन्[b]- -रिणे शुअ ४,२२०; –री बौगृ ३,२,५; चव्यू २:२७.
१अ-ब्रह्मन्[c]- -ह्म आपध १,५,७; हिध १,२,७,
२अ-ब्रह्मन्[d]- -ह्मणः,–ह्मा शांश्रौ १२, २१,२†.
अब्रह्म-ज्य[e]–ता- -तायै[f] वाधूश्रौ ३, ७१ : ३[२].
अब्रह्म- ( न्यु> )ण्युब्जिन्[g]–> °ब्जि-ता- -तायै[f] शांश्रौ १६, १८,११[h].
अ-ब्रह्मसामन्[b]- -म्नि निसू २,४:३७.
अ-ब्राह्मण[i]- -णः आश्रौ १२,९,१३; आपश्रौ ४, ११, १; १४,२; ७, २७, १४; बौश्रौ १६, ३३ : ६; ११; ३४ : ३; ३५ : १३;३६ : ३; १७, ३० : ७; ९; भाश्रौ ४, १६,२; ७, २२, १५; माश्रौ १, ३,१,२८; वाश्रौ १, १, ४, १६; हिश्रौ ४, ५, ५२; ६, ३,३; ८, ७, ४३; शंध १३५; आपध १, २७, १०[j]; गौध ५, ४३; १०, ४४; –णयोः अप १, ३२, ५; –णस्य शांश्रौ १,४,१७; आपश्रौ ४, ११, १; भाश्रौ ४, १६, २; वाश्रौ १, ३, ४, २०; हिश्रौ ६, ३,३; बौध १, १०, १६; २,२, ५४; मीसू ३,५,२३; –णाः लाश्रौ ९,२,२५; –णात् आपश्रौ १०, २०,१२†; बौध १,२,४२; गौध ७, १; –णान् अप ४१, ४, ६; गौध १०, १०; –णानाम् आश्रौ १०, १०, १०; शांश्रौ १६, ९, २२; आपश्रौ २०, ५, १७; ९, १४; २४,१२; २५,२१; लाश्रौ ९, १०, १६; गौध १३, १४; –णाय आपश्रौ १३, ७, ६; ७; वैश्रौ १६,८ : १; २; हिश्रौ १०, ४,७२; द्राश्रौ १,२,१७; ६, ४, १५;१७†; लाश्रौ १,२,११; २, १२, १६; जैगृ १, १९ : ४१; कौसू ९१,२०†; आपध १,३१, २२; हिध १, ८, ४१; –णे जैगृ २, १ : ३३; शंध ३२५; विध ९३, १; भाशि ११२†; मीसू १०, ७, ८; –णेन बौश्रौ २०, १ : ५७.
अब्राह्मण-ब्राह्मण-श्रोत्रिय-वेदपारग[k]- -गेभ्यः गौध ५,२१.
अब्राह्मण-वचन[l]- -नात् गौध १३,५.
अब्राह्मणा(ण-आ)दि- -दि हिध १, ७,३५[j].
अ-ब्राह्मण-राजन्य[m]- -न्यात् पा ५, ३,११४.
अ-ब्राह्मण-विहित[n]–त्व- -त्वात् निसू ४,७ : ६.
अ-ब्राह्मणा ( ण-अ ) प्रतःकृत[o]- -तम् कौसू ७४,१२.
अ-ब्राह्म(ण>)णी- -णीभ्यः अप १, ४९, ६; –णीम् वैताश्रौ ३७, १८; लाश्रौ ९,२,६.
अ-ब्राह्मण्य[p]- -ण्यम् आश्रौ ९,३,२०.
अ-ब्रुवाण- -णाः या ९,६.
अब्-लिङ्ग- √*अप् द्र.
अ-भकार-पर[q]- -रम् शुप्रा १,१६३.
१अ-भक्त[r]- -क्तम् वाधूश्रौ २,१७: १.
२अ-भक्त[s]- -क्ते पावा १,१,४७; ५१; ६,१,७०; १३२; ७,२,८२.
अ-भक्ष- -क्षः निसू ३,८ : १८; मीसू १०,७,२३; –क्षस्य या ५,१३; –क्षाणि शंध ४१८; –क्षेभ्यः निसू ३,८ : १८.
अभक्ष-त्व- -त्वम् मीसू १०,७,१८.
अभक्ष-भक्ष- -क्षः अप ३६,८,४.
अ-भक्षण[t]- -णम् आश्रौ ५,६, २४; सुधप ८६ : ११.
अ-भक्षणीय- -यम् माश्रौ ३,६, १४; –यान् काश्रौसं ३३ : १.
अ-भक्षयत्- -यन्तः लाश्रौ ८, १०, १०.
अ-भक्षयित्वा शांश्रौ ८,५,२.
अ-भक्षित- -तम् आपश्रौ १२, २९, ५; १४,२९, १; हिश्रौ १५, ७, १४; –ते आपश्रौ १२, २५, ४; वैश्रौ २१,१६ : १; –तेन काश्रौ १०,६,२; आपश्रौ १२,२७, ८; १३,८,२; वैश्रौ १५,३५ : १०;

*a*) विप. । बस. । *b*) तस. । *c*) नाप. (वेदेतर-ग्रन्थ-) । तस. । *d*) वैप १, परि. च द्र. । *e*) उस. उप. √ज्या ([अभिभवे] >कर्तरि प्र. [तु. माश १३,४,२,१७])। पूप. =यो ब्राह्मणः सन्नविद्वान् स्यात् तत्पर्याय इति कृत्वा नञ् क्षेपार्थे द्र. । *f*) सप्र. परस्परं पाभे. । *g*) उस. उप. नि√उब्ज् [अभिभवे]>कर्तरि प्र. द्र., पूप. कृते e टि. द्र. । *h*) °ब्ज-ता->-तायै इति C. शोधः ? । *i*) नाप. (ब्राह्मणेतर- वर्ण-) । तस. । *j*) सप्र. अब्राह्मणः<>अब्राह्मणादि इति पाभे. । *k*) द्वस. । *l*) षस. । *m*) विप. । बस.>द्वस. । *n*) तस. उप. तृस. ब्राह्मण- =ग्रन्थ-विशेष- । *o*) विप. । तस. >तृस. । *p*) तस. उप.<ब्राह्मण-(वर्ण-विशेष-) । *q*) विप. । तस.>बस. । *r*) =अविभागेन, सर्वकालम् इति प्रास. वा. क्रिवि. । उप. भाप.< √भज् । *s*) तस. उप. √भज्+ कर्तरि क्तः । *t*) विप. । तस. ।

हिश्रौ ८,८,२१; ९, २,२४; ३, ५८.

**अ-भक्ष्य-** -क्ष्यः आपध १, १७, ३८; हिध १, ५, ६९; –क्ष्यम् अप्राय ४, १; विध ६६, १२; वैध २, १५,१; –क्ष्यस्य विध ५,१७३; १७४; –क्ष्याः बौध १,५,१२७; गौध १७,३२; –क्ष्याणाम् सुधप ८७ : ७; –क्ष्याणि शंध २२८; ३४०; ४२४; –क्ष्येण विध ५, ९८.

अभक्ष्य-पातक- -केभ्यः कौगृ १, ८,१; शांगृ १,१२,२.

अभक्ष्य-भक्षक- -कः शंध ३७७ : ५.

अभक्ष्य-भक्षण- -णम् गौध १९, ३; –णे अप ६८, २, १७; काध २७४ : ४.

अभक्ष्या(क्ष्य-अ)न्न-भोजन[a]- -नम् वैध २,१२,३.

अभक्ष्या(क्ष्य-अ)भोज्या (ज्य-अ) पेय-प्राशन[b]- -ने आपध १, २६, ७[c].

अभक्ष्या(क्ष्य-अ) भोज्या (ज्य-अ)-पेया(य-अ)नाद्य-प्राशन[b]- -ने हिध १,७,१८[c]; –नेषु बौध ४, १,७[c].

**अ-भक्ष्या(क्ष्य-आ)च्छादन[d]-** -नयोः पा ४,३,१४३.

**अ-भङ्गुर[e]-** -रम् बौश्रौ २५, ५ : २; हिश्रौ १०, १, २१; आग्निगृ ३, ४,१ : १३; ५,५ : २; बौपि १, ४ : २; ३,२ : ८; हिपि १ : ३; गौपि १,२,६.

**अ-भञ्जत्-** -अन् काश्रौ ६,७,५.

**अ-भद्र-** -द्रम् अप ७०[२],६, २; गौध ९,२१.

**१अ-भय,या[f]-** -यः अप ५,३,५;३२, १, १२†; –यम् आश्रौ २, ५, १९[२]†; ३, ११, १; शांश्रौ; काश्रौ २५,१२,४[fg]; आगृ २,४, १४[२h]; मागृ २,८,६[२i]; –या सु २४,२; आगृ २,४,१४†; पागृ ३, २,२; अप ६३, ५,५; अशां १६, १; –†याः माश्रौ १, ६, ४, २१[j]; कौगृ २, ३, १०; शांगृ २,६,१; मागृ २, ८,६; –यानाम् कौसू १६, ८; –यानि अप ३२, १,१२; –याम् सु २४, ३; अप ६०,१,६; ६९, ६,२; अशां १७, ५; –याय कौसू ५६, १३†; अप ५२, ९, ३; –यायाम् अशां १८, ८; १९, ८; –ये आपश्रौ १४, ३२, ५; बौश्रौ २९, ५ : १९; वाश्रौ १, ५, ५,७†; हिश्रौ १५, ८,३२; कौगृ ४, ४, ९†[j]; शांगृ ४, १८,१†[j]; पागृ ३, २, २†[j]; –येन अशां १२, ५; –यैः कौसू १०५, १†; १३९, ७; अप्राय २, ४; ६, ९[२]; अप १७, २, ८†; ३३, ६, ६; ४६,२,१.

अभय-काम- -मः कौसू ५९, २६; अअ ६,४०;५०.

अभय-गण[k]- -णः अप ३२,१,२९; अशां १८,८.

†अभयं-कर[l]- -०र आपश्रौ ६,२७, १; वैश्रौ २, १० : १५; १६; हिश्रौ ६,७,८[२]; –रः आपश्रौ ३, १२, १; भाश्रौ ३,११,१; हिश्रौ २,६,१३; –रम् अप ३३,७,४.

†अभयं-कृत्[l]- -कृतौ आश्रौ १,९, १; शांश्रौ १,१४,४.

†अभय-तम[l]- -मेन आग्निगृ ३,५, ४ : १०; बौपि १,३ : १९.

अभय-दाक्षिण्य[l]- -ण्यम् वाध ३०, ८.

अभय-दातृ- -ता वाध २९,१०.

अभय-दायिन्- -यी आग्निगृ २,७, १० : १२.

अभय-प्रद,दा- -०द अशां ४, २; –दम् अप ६, १,१३;२५, २,१; –दाम् अप ६०,१,६.

अभय-प्रदान- -नम् विध ९२,१.

†अभय-सनि[l]- -नि शांश्रौ ४,१३, १; आपश्रौ ६, ११, ५; बौश्रौ ३, ७ : २; भाश्रौ ४, २२, ४; वाधूश्रौ २,१६ : ३; हिश्रौ ३,७, ९२.

अभया (य-अ)पराजित[m]- -तौ अप ३३,१,९; अशां २४,१.

अभया(य-अ)पराजिता(त-आ)युष्य[m]- -ष्याः अप ३३,६,१.

अभया(य-अ)र्थ- -र्थम् अप ४, १, २२.

**२अभय-** (> आभय-, आभय्य- ) अभयजात- द्र.

**अभयजात[n]-** > आभयजात्य-, आभयजात- पाग ४,१,१०५[o];

a) कस.>षस.। b) द्वस.>षस.। c) सप्र. परस्परं पाभे.। d) तस.>द्वस.। e) विप.। तस.। f) वैप. १, परि. च द्र.। g) पाभे. शोचश्च वैप १,९६३ h द्र.। h) पाभे. पृ १३० द्र.। i) सकृत् सप्र. आगृ २, ४,१४ पागृ ३, ३, ६ पापम् इति पाभे.। j) पाभे. वैप. १ परि. अभये तै ५, ७, २,४ टि. द्र.। k) नाप. (अभयकारिमन्त्र-समूह-)। षस.। l) सस. उप. =नैपुण्य-। m) द्वस.। n) व्यप. (ऋषि-विशेष-)। व्यु. ?। o) पागम. [पक्षान्तरे] २अभय-, जात- इति, पाका. २अभय-, जात- इति च द्वे पदे।

२,१११; –ताः बौश्रौप्र ४ : १[a].

**अ-भविष्यत्–** -ष्यति पा ७,३,१६.

**अ-भस्मा(स्म-अ)स्थ्य(स्थि-अ)ङ्गार-तु(ष>)षा**[b]– -षा अप ३०, १,४.

**अ-भस्त्र(क>)का–, °स्त्रि(क>)का–** पा ७,३,४७[c].

**१अ-भाग**[d]– -गे पा १,४,९१.

**२अ-भाग,गा**[e]– -†गः आपश्रौ ४, ११,१; भाश्रौ ४, १६, २; हिश्रौ ६, ३, ३; भाशि ५३; –गम् आपश्रौ ४, ११, १†; भाश्रौ ४, १६, २; हिश्रौ ६,३, ३†; आपमं २, ६, १२[२]†; आपध २, १४, १५; हिध २, ३, २६; गौध २८, २४; –गाम् आपश्रौ ९,१५,२२; भाश्रौ ९, १८,११; हिश्रौ १५,४,४२.

**अ-भागहारिन्**[f]– -रिणः विध १५, ३२.

**अ-भागिन्**[d]– -गिनः विध १५,३७.

अभागि-त्व– -त्वात् मीसू ९,३,१०; १०,२,१५.

अभागि-प्रतिषेध– -धात् मीसू १, २,५.

**अ-भार्य**[g]– -र्यान् कप्र १,६,५.

**अ-भाव–** -वः काश्रौ ४, २, २३; लाश्रौ ३, ४, २४; पावा २, ३, ४६; ३,२,१३; मीसू ६, १,३७; ९, १,१०; –वम् ऋप्रा ६, ५०; –वस्य अप ७१, १८, ५; पावा ३, १, ९१; मीसू ८, ४, २१; –वात् काश्रौ १, १, ११; कौसू; –वाय आग्निगृ २, ४, ८ : २४; –वे आश्रौ ८,४,२५; काश्रौ.

°अभाव– -वः पावा १,१,२७;२, २,२५; ३,१,८३;४,३,१५३;६, ४, १२०; ७, १,७३; २,१; ३, ९२; पाप्रवा ५,१३.

°अभावा(व-अ)र्थ– -र्थम् पावा २, २,२५;२७;२८.

अभाव-दर्शन– -नम् मीसू १०,५, ४०; –नात् मीसू ४, १, ३६; १०,५,३५; १२,२,५.

**अ-भाव-कर्मन्**[h]– -र्मणोः पा ६,४, १६८.

**अ-भाव-लक्षण**[i]– -णे पावा २,३,३७.

**अ-भा(षा>)ष**[g]– -षाणाम् अप ६४, ३,४.

**अ-भाषयत्–** -यन् कप्र ३,४,१०.

**अ-भाषित-पुंस्क**[j]– -स्कात् पा ७, ३,४८.

**अभि,>भी**[k] †आश्रौ २,५,१२[२]; ३, ७, ६; १०, ३१; १३, १८; ४, ४,२[l]; ६,३[२];७,४; ५,१०,२८; १५,२[२]; ६,४,१०[६];५,१८;१३, १४; ७,४,३; ८,१; २; ८,१,२; १८; ६,१६;११,१; ३;१२,२३; ९, ११,१५; १०,२, २०; १०, ६; †शांश्रौ २, १५,२[५]; ४[२]; ४, १६,५[m]; ५, ६,२[l];९,७[२]; ६,४, १; १०,२; ७, १२,४; २०, ३[२]; २३,४;८,२४,१[२]; ९, ७,४;१३, १[२]; १०,८,१०; १२, २, ७; ९, ११; ११, २०; १२, ७; १२; १७,१; १४, ३३, ७[n]; १५,१५, ६[o]; १८, २, २; ७, १५; ८, ११;१२,४; काश्रौ ७,७,१०†; १०, १, ४; ३, २२†;९,२८[n]; †आपश्रौ १,१८,३; ४; ३, ११, २; १५, ११$[p]; २०, १०;४, १,१०[२]; ५, ६, १; ११, ६; ६, १०, ४; ७, १७, १; ९, ४, १; ११,२२; १०, १५,१०; १८,३; १९,८[l]; २४, ८; १२, १९, ५; १६,७, ४; १७, ८, ४; १८, १; १९,२२,१२; १६;२३,१; २१, ३,१२; ४,२;२१,१८; २२,२६, १५; २८, १६; काठश्रौ १६०; बौश्रौ २,६ : २५†;१६ : ३७†; †३,२६ : ३;३० : २०; ४,६ : ३६†; †६, ७ : २२; ९ : ५; १४ : १४;१५;१६ : ५; ७, ५ : ९; ७ : ३०; १७ : २०; ८,१ : ७; २ : १०; १६; ८ : २; १० : २०; ११ : २†; ९, १० : ३०; १०, १७ : ८†[l]; २५ : ६-८; १४; १५[२]; २६ : ९†; २८ : १;३५ : १९; २१;२३; †४५ : १९; २०; ५४ : १८†; ११,४ : २०†; १२, ४ : ८†; ९ : १६; १५ : १५;१३,२१ : ४†; २९ : ११†; १४,१:२१†[l]; ५ : १६†; १० : १; ३३; १७ : २३; २६ : १६; †१८, १० : १८; १७ : १८; २२, १९ : १५; २४,९ ,

---

*a*) बहु. < **आभयजात्य–** । *b*) विप. (भूमि-) । बस.>द्वस. । *c*) पासि. **निर्भस्त्रका–, °स्त्रिका–** इति । *d*) तस. । *e*) वैप **१**, परि. च द्र. । *f*) विप. । तस. । *g*) विप. । बस. । *h*) तस.>द्वस. । *i*) तस.>षस. । *j*) विप. । तस.>बस. । *k*) लक्षणे कप्र. यथायथं द्र. । *l*) पाभे. वैप **१ अधि** शौ **७**, ९, १ टि. द्र. । *m*) तु. सा [ तैब्रा **३**, ७, १४, ५ ], C. च; वैतु. PW. प्रभृ. **अभि···शीयताम्** इति । *n*) वैतु. PW. प्रभृ. **अभिसंतिष्ठते** इति । *o*) वैप **१** परि. **अनु** मा **१९**, ४० टि. द्र. । *p*) **अभि, संशयीत** इति पाठस्य स्थाने **अभिर्शंसति** इति संभाव्येतेति C. ? ।

८; ३८ : ९; २५, १८ : १४; †भाश्रौ १,२, ११; ३, १०,२; १८, ११; ४, २, २$^{२}$; ७, १३, ४; ९, ५, २२; १०, ११, ११; १२,१५[a]; १६, ६; माश्रौ २,१, २,३३;३,१५†[a]; ४,३†; †५, ४,९; १७; ३, ५, १४†; ५, १, ६,२६†; ८,११; †२,३,८;१२; ६, १, ३, ७; २, ३, १†; ८$^{२}$; वाधूश्रौ २,२२ : ३; ३,१२ : ३; ७५ : १२; ९९ : २; ४, ५ : ३[b];२७ : २; ५-८; ९$^{२}$; १०; १७; १९; ६५$^{३}$ : ७; ६७ : ९; ९४$^{४}$ : ८; वाश्रौ १, ३, ३, ९; ४, २, १६†; २, १, ८, ५†; ३, १, २, १†[c]; २, ५, २०†; ४,१, २३?; †वैश्रौ १२, ११ : ६; १२ : ११; १४ : १०[a]; १७ : १५$^{६}$; १६,१ : ५$; १८, ५ : ३; ११ : ७[a]; १९,५ : ४५: ४८[d]; २१.१ : ६[a]; हिश्रौ १,२, ५$^{२}$†; १६; ७, ७; १३; २, ६, ११†; ८, ४२†; ३, २, ५१†; ३, ४७; ४, ३, ५४†; ६,३, २; †७, १, ६५[a]; २, ३९; ९, ५, ४३†;१०,२,६४; ११,२,२†; १५,१,७५†;१६,७,१४†;२२, ३,२७†; ४,१७$^{३}$; †२३,४,२९; ५५; २४, १, २१†; जैश्रौ ९ : १८;१७ : ४†; जैश्रौका २२†; २६†; ४८; ५२; ६१†; ७२†;

†द्राश्रौ ६, १, १; ८, २, १५; †लाश्रौ २, ९, १; ४, ६, १४; ९, ९, २२; †वैताश्रौ २१, २; २३, १२; २६, ९$^{२}$; २९, १९; ३१, १८; २४; ३२, ५; ३३, २$^{२}$; ७; ३९, ६; ४०, ९; १०; ४१, ८; ४२, ५; ९; †क्षुसू २, १० : १०; ११ : २; †निसू १, १ : २१; ६, ४ : १८; ७, ४ : २२; †आपमं १, १, १; ३, १४; ४, ८; २, ११, २८; २०,२४$[b]; सु १७, ४; कौगृ ५, ८,५†; †पागृ १,५,११; ३,४, ४; †आग्निगृ १,५,२ : ५३; ६, २ : १०; २, ४, २ : ४[e]; ३,१, १ : ९; ५,६ : १५; १७; ६,१ : २५; ४ : १४$; ७, ४ : १०; आपगृ ४,१४$^{२}$;१६; †कागृ २२, १; २६, २[c]; १२; ३७, ४; ४१, ८$; ४५, १२; †बौगृ १,१, १४; ४, १०; २१; †बौपि १, ५ : ३; ४; ९ : २; १३ : १२$^{२}$; २, ४, १; भागृ १, १४ : ५†; १५ : ६; ७†; १८ : ८†[f];२४ : १३$^{२}$; २, ११ : ९; मागृ १, १३,४[c]; २२,७†; वागृ ५,१९$^{२}$; १५, १†[c]; हिगृ १, १६, १७[g]; १९,७;२०,१; २८,१†[e];२,१०, ६$, हिपि २३ : १९†; गौपि २, ६,२२†[h]; जैगृ १,२०:९†; †कौसू १४, ७; २४, ३; ४७,

१६†; ५९, १५; १९; $८४, १५; १६; ९६, ३; अप्राय १, ५†[a]; २,६†; ३, ५; ८; †अप ३२, १, १३; १८; ३७, १, ९; १०,१; ४१, १,८; ६७, ५, २; †अशां १८, १; १९, ५; आपध १, ६, ३; बौध २, ६, ३२; †ऋअ २,१,५१; ७८; ८, १५; ४९; ९, ७५; ९८;१००; बृदे५, ११७†; ७, ८७; ८, १५†; †शुअ १,२७५; ३,११; †चाअ २ : ८; ३९ : १३; †साअ १, १६१; १६८;२३३;२३५;२६५; ३०९;४६४;५२८; ५४९;५५०; ५५४; ५५६; २, २०६; ७७६$^{२}$; ११९३; †अअ ७,१४;८२;२०, ७; २२; ४८; ५१; ६२; १२१; †अपं २ : ७७; ८३; या १,३; ६†; २,५;११†; †३,११;१६; †६, ११[i]; २६[j]; ७, २†; ९, ३३†[k]; †१०, ३[l]; ३०; ३७; †११,४२[m];४५;१२,२; †ऋप्रा २,४६; ४, ९८; ५,१७;४३; ८, ४४; १२,२४; १५,१७$; १६, ५२[n]; उसू ८, ३०†; †शुप्रा ३,९९$^{२}$; ४,७५; ७८; ६,५;१०; २४; २६; †तैप्रा ४,४२; ११, १३; अप्रा १, १, १२†; †शौच ४,३;४; पाग १,४,५८; †उनिसू ४ : २४;२५[n]; ५ : २४;३३;७ : १३.

*a*) पाभे. वैप १ अधि शौ ७, ९,१ टि. द्र. । *b*) स्वाअ. । *c*) पाभे. वैप. १ परि. अनु तै १,७,७, २ टि. द्र. । *d*) सपा. आपश्रौ १७, ८, ४ अधि इति पाभे. । *e*) तु. पृ २८६ m टि. । *f*) पाभे. वैप १ परि. अपि शौ २०, १२७, १२ टि. द्र. । *g*) कप्र. ( तु. Böht. [ZDMG ५२, ८४]; वैतु. संस्कर्ता शब्दसूच्यां गतिरिति ?)। *h*) पाभे. वैप १ परि. अभिमन्त्रये टि. द्र. । *i*) तु. ऋ ७, १०४, २; वैतु. स्क. क्रिउ. इति । *j*) तु. ऋ ८, ६६, १०; वैतु. या. अभिभञ्जि इति । *k*) तु. ऋ १०, १०३,१२; वैतु. या. अभिप्रेहि इति । *l*) तु. ऋ ६, ३७,३; वैतु. या. अभिवहेयुः इति । *m*) तु. ऋ १, १६४,२८; वैतु. या. [स्क., दु.] अभिवावशाना इति । *n*) वैप १,३१७ ० द्र. ।

अभि- -भिः पा १, ४, ९१; -भेः या ५,२८; शुप्रा ३,६३; पा ६, २,१८५; पावा ६,२,१८६.

**अभि**[,भी]-क[a]- पा ५,२,७४†.

**अभि√कम्**, अभिकामयेत विध ९६, १८; अभिकामयेयुः विध ५,१४.

**अभि√कम्प्**, अभिकम्पयति काश्रौ ७,८,१६.

**†अभि√काश्**, अभिचाकशीति या १४,३०; अप्रा १,१,१५; अभिचाकशीमि आपश्रौ १७,१८,१[२].

**अभि√कृ**[b], अभिकृणोतु अप १[२], १,४.

†अभिचक्रिरे अप १, ३८,१; ३; अशां ८,१; ३.

अभि-कृति[c]- -तिः निसू १,५:१२; शुअ ४, १८९; ऋप्रा १६, ८९; ९२; उनिसू २:१८; पिं ४,३.

**अभि√कृष्**, अभिकर्षन्ति शांगृ ६, ६,५.

अभिकृषति हिश्रौ ११, ६, ३८; अभिकृषेयुः लाश्रौ ८,३,७.

**अभि√क्लृप्**, अभिकल्पयेत् द्राश्रौ १३,३,३.

†अभि-कल्पमान- -नौ बौश्रौ २, १६:१७; वैश्रौ १८,१७:४३; १९,२:१०.

**अभि-क्रतु**[d]- -तूनाम् बौश्रौ १८, ३१:१६†.

**अभि√क्रन्द्**, अभिक्रन्दति वाधूश्रौ ४, २७:१३; १६; अभि···क्रन्दति बौश्रौ १५, १७:२७; अभिक्रन्दन्ति या ७,७†; अभि-···क्रन्दन्ति बौश्रौ १५,१७:२७; †अभिक्रन्द आपश्रौ १९, २५, २१; बौश्रौ १३,३८:४; वैताश्रौ ८,९; सु ९, ३$; शांगृ १, १९, ११[e]; अभिक्रन्देत् लाश्रौ ९, ९,२१.

अभिक्रन्दयति हिश्रौ २२,६,४.

†अभि··अचिक्रदत् आपश्रौ १६,२०,१४; हिश्रौ ११,६,६१.

†अभि-क्रन्दत्- -न्दन् वाधूश्रौ ३,५:२; कौगृ १,१२,६[e]; अअ ११,५.

**अभि√क्रम्**, अभिक्रमते ऋप्रा १५, ८; अभिक्रामति निसू १,१:८; १३; १८; अप ४५, १, १६; अभिक्रामन्ति बौश्रौ ९, १३:३०; १४:३; ५; १, १६:४; ६; अभिक्रमेत ऋप्रा ११, ३३; अभिक्रमेत् उसू ३, ४; अभिक्रामेत् बौश्रौ २०, १३:२; ४; २९:१६; १७[२].

अभिक्रामयति भागृ २,२९:१०.

अभि-क्रम- -मः बौश्रौ २६, १२:१४; -मे ऋप्रा ११,४४.

अभि-क्रमण- -णम् हिध २, १, ८२[f]; गौध २, ३२.

अभि-क्रम्य आश्रौ १,३,२५××.

अभि-क्रान्त- -न्तम् आपध १, २९, ७; हिध १, ७, ६३; -न्ते ऋप्रा १५,१०.

अभिक्रान्तिन्- > °न्ति-तम- -मः लाश्रौ ८,६,१.

†अभि-क्रान्ति- -न्त्यै लाश्रौ १०, ५,९; गौध २५,६.

अभि-क्रामत्- -मन् आपश्रौ ३, १६, १७; बौश्रौ २०, १३:३; माश्रौ २,१६,५; आगृ २,६,१३; पागृ २, ५, ३०; -मन्तम् पागृ २,५,३०.

अभिक्रामन्ती- -न्ती कौसू ४,१५.

अभि-क्रामम् काश्रौ ३, २, २०; ६, ८, ४; आपश्रौ २, १७, ५; ६, १०,५; ६; ११, १४, ९; बौश्रौ १४, २:१६; २०, १३:१; २३,५:१; माश्रौ १, ३, २,२; हिश्रौ २,२,२८.

**अभि√क्रुध्** > अभि-क्रुद्ध- > °द्धा-(द्ध-अ)वगोरण[g]- -णे गौध २१,२०.

**अभि√क्रुश्**, अभिक्रोशन्ति बौश्रौ १८,२४:२१; अभ्यक्रोशन् बाध ५,८†.

**अभि-क्षण**- -णम् या २,२५.

**अभि√क्षर्**, अभिक्षरन्ति वैताश्रौ २४,१†[h].

**अ-भिक्षि**(त>)ता- -ता बौध १, २, ५७.

**अभि√क्षिप्** पा १,३,८०.

**अभि√खन्**, अभिखनेयुः आपश्रौ १०,२०,७.

**अभि√ख्या** > अभि-ख्या[i]- -ख्या निघ ३,९†.

अभि-ख्या°प्र शंध ४५५.

**अभि√गच्छ्,गम्**, अभिगच्छन्ति अप ३५, २, २; †अभिगच्छत[j] शांश्रौ ४, ११,६; माश्रौ १, ४, ३,९; वाश्रौ १,१,४,२१; लाश्रौ २, १,७; पागृ १, ३, १४; मागृ २,११,१८; अभ्यगच्छत् बृदे ४, ९५; ५,५२; ८,३; अभिगच्छेत्

---

*a*) वैप १, परि. च द्र. । *b*) प्रायेण धा. करणे वृत्तिः, अप १, ३८,१ अशां ८, १ तु हिंसायाम् इति विशेषः। *c*) नाप. (छन्दोविशेष-)। *d*) विप. (शत्रु-)। वैप १, परि. च द्र.। *e*) पाभे. वैप १ परि. अभिस्कन्द शौ ५,२५,८ टि. द्र.। *f*) सप्र. नाऽभिक्रमणम् <> अ-विप्रक्रमणम् इति पाभे.। *g*) तृस. उप. <अव√गुर्। *h*) सप्र. तैब्रा ३,७,१३,३ उपक्षरन्ति इति पाभे.। *i*) नाप. (प्रज्ञा-)। वैप १ द्र.। *j*) पाभे. वैप १ परि. अपीतन टि. द्र.।

अशां १५, ६; वाध २१, १-३; १६; विध ६,१९; सुधप ८६:५; अभिजगाम बृदे ४, ४८; अभिजग्मतुः बृदे ५, ६१; ७, ६४; ८९.
अभि-गच्छत्- -च्छन् विध २८,१९; या ६,२७[a].
अभि-गत- -तः आश्रौ ८, ३, २२; शांश्रौ १२,२३,२; वैताश्रौ ३२, २३.
अभि-गम-(>आभिगामिक-पा.) पाग ७,३,२०.
अभि-गमन- -नम् गौध १८, १६; पावा ५, १,७४; -नस्य आग्निगृ २, ७,९:१७; -ने कौगृ १,२, २; शांगृ १, ६, २; सुध ४८; सुधप ८५:२.
अभि-गमयत्- -यन् आपश्रौ १९, २२, ३; बौश्रौ १३, २८:१४; ४२:६; २६, ६:१०; हिश्रौ २२,४,१६.
अभि-गम्य कौगृ ३,११,२; आग्निगृ.
†अभि √गा, अभि…जिगाति आश्रौ ४,७,४.
अभि…गात् या ६,२७; अभिगाः वैताश्रौ १९,१८[b].
अभि-गार्हपत्य[c]- -त्यम् हिश्रौ १,६, ९०; हिशु २,६.
अभि √गाह् > ϕअभि-गाहमान- -नः साश्र २,१२०५.
अभि √गुर् > अभि-गूर्य > र्या या ८,३†.
†अभि √गृ (शब्दे), अभि…गृणातु या ११,४९[d]; अभि (गृणातु) निसू १, ७:१४; बृदे ५, ३७; अभि…गृणन्तु आश्रौ ४, १२, २; अभि…गृणीहि आश्रौ ४, १२, २[e]; अभि(गृणीहि) शुअ ३,७२.
अभि-गर[f]- -रः बौश्रौ २,३:११†; माश्रौ १, ८, १, ११†; वाश्रौ १, ६, १, २†; ३,२, ५, ३३:३५; वैश्रौ १२,१:१७†; द्राश्रौ ११, ३,१; ३; १२; लाश्रौ ४, ३, १; ४; १३; शुप्रा ४, ६६†; -†रौ[g] शांश्रौ १०, १८, ४; बौश्रौ १९, ७:४२; वैगृ ५, ४:१३.
अभिगर-प्रभृति- -तयः द्राश्रौ ११,३,२३; लाश्रौ ४,३,२२.
अभिगर-श्रुति- -तेः काश्रौ २४, ४,४९.
अभिगरा(र-आ)दि- -दि काश्रौ १३,४,२.
अभिगरा(र-अ)पगर- -रौ काश्रौ १३,३,६; लाश्रौ १०,२०, १०; १२; निसू १०,१२:८;९;१५; १७.
ϕअभि-गृणत्- -†गन्तः[h] बौश्रौ १, १९:३८; कौसू ६.९; शुप्रा ३, ९९.
अभि √गृह्, अभिगृह्णीते वैश्रौ १५, ३४:४; अभिगृह्णाति आपश्रौ २,१, ८; २, २; बौश्रौ; अभिगृह्णीतः आपश्रौ १२,२६, १०; हिश्रौ ८, ८, ३; अभिगृह्णीयात् बौश्रौ २९, ५:८; वाधूश्रौ ३, १९:१९; वैश्रौ २१,१५:१०.
अभि-गृहीत- -तान् वैश्रौ ९,५:९.
अभि-गृह्य आपश्रौ ५, ११, ६; ९, १७,२; ३; १०, २३, २; बौश्रौ.
अभि-गृह्यमाण- -णम् आपश्रौ ४, ५,३; माश्रौ ४, ६,६.
†अभि-ग्रह[i]- -हाय आपमं २, ७, २१; हिगृ १,१०, ४.
अभि-ग्रहण- -णे बौश्रौ २३, ९: २०; -णेन बौश्रौ २६, १२: १८.
अभिग्रहणा(ण-अ)र्थ[j]- -र्थः बौश्रौ २६, ९:१२.
†अभि-ग्राहि(न्>)णी[i,k]- -णीः बौश्रौ १७, ४१:१; आपमं २, ७,२१-२३; आग्निगृ १, ३,३: १५; भागृ २,२०:४; हिगृ १, १०, ४.
अभि √गॄ (निगरणे), अभिगिरति वैश्रौ ७,१:६.
अभिगृणातु कौसू ४२,१७†.
अभि √गै, अभिगायते आपश्रौ ५, १४, ४; अभिगायति जैश्रौप १०; २०; द्राश्रौ १२, २,१४†; वैताश्रौ २७:९.
अभिगीयते हिश्रौ ११,७,२१.
अभि…गीयते आश्रौ २, १२, ६; ५,५,२१; ८,१३, ३१; आगृ १,३,१०.
अभि-गीत- -तम् उसू ८,३६.
अभि √ग्रस्, अभ्यग्रसत वाधूश्रौ ४, ३०:१९.
अभि-ग्र(स्त>)स्ता- -स्ता या ५,

*a*) अधि॰ इति RN.। *b*) पाभे. वैप १ परि. अतिगाः तै ३,२,५,३ टि. द्र.। *c*) आभिमुख्ये अस. (पा २,१,१४)। *d*) या. [पक्षे] स्मत् अभि॰ इत्यप्याह। *e*) पाभे. वैप १ परि. अभि…गृणीहि पै १५,२,१ टि. द्र.। *f*) वैप १, परि. च द्र.। *g*) =अभिगरापगरौ (तु. C.)। *h*) पाभे. वैप १ परि. अभिगृणन्तु शौ १८,१,५२ टि. द्र.। *i*) नाप. (देवता-विशेष-)। गस. उप. कर्तरि अच् प्र.। *j*) विप.। बस.। *k*) उप. कर्तरि णिनिः प्र. इति विशेषः।

२१.

**अभि-घात-**, °घातम्, °घ्नत्- अभि √हन् द्र.

**अभि √घुष् > अभि-घुष्ट-** -ष्टम् वाध १४,९.

**अभि √घृ**, †अभिजिघर्मि[a] आश्रौ १, १३,१; वाश्रौ १, १,५,१८. **अभिघारयति** काश्रौ ३, ३, १२××; आपश्रौ; **अभि···घारयति** आपश्रौ ३,१,४; **अभिघारयतः** बौश्रौ ५,८ : १५; हिश्रौ ५, २,३७; †**अभिघारयामि** आपश्रौ २,१०, ४; बौश्रौ; माश्रौ ५,२, १५, १९[a]××; **अभिघारयेत्** आपश्रौ २,१७, ७;३,२,८; १८, २१,११; काठश्रौ; **अभि···घारयेत्** आपश्रौ ९, १६, ११; भाश्रौ ९,१९,८; हिश्रौ २,३,४.

**अभि-घारण-** -णम् काश्रौ १, ९, १०; ३,३,९; ५, ९, ४; ६, ६, २३; काठश्रौ १४; ६३; १०७; वाश्रौ १,१,१,३४; आपगृ ७,८; -णस्य मीसू १०,३,३८; -णात् माश्रौ १,७,१,३५; -णानि हिपि १४ : १९; -णे आपश्रौ ७,१२, ९; बौश्रौ २०, २९ : १९; मीसू ४,१,३३.

**अभि-घारयत्-** -यन् बौश्रौ ४, ४ : २४; माश्रौ १,७,१,३०.

**अभि-घारित,ता-** -तः बौपि १,१४ : ८; -तम् वाधूश्रौ ३,३४ : ९; वैताश्रौ ३,७; कौगृ १,५,८; बाध १४,२९; -तान् आपश्रौ ८,१०, ९; वैश्रौ ९,२:७; वागृ १४,१८; जैगृ १,२१ : १८; -तानाम् शंध १७६; -तानि आग्निगृ २,५,८ : ९; बौगृ २,७,१५; -ताम् बौश्रौ २५,२ : ९;२६ : ११; बौगृ २, ७,१७; -ते हिश्रौ २१,२,५२.

**अभि-घार्य** आश्रौ २,६,१०; शांश्रौ.

**अभि-घार्य-** -र्यान् भाश्रौ ८,२१,३.

**अभि √घ्रा**, **अभिजिघ्रति** वैश्रौ १, १० : १४; बौगृ २, १, ५; †**अभिजिघ्रामि** आपमं २, १२, १; आग्निगृ २,१, ५ : ३६; बौगृ २,१,५; भागृ १,२७ : १६;१७; वागृ ३,९; हिगृ २,४,१७[b]; गोगृ २, ८, २२; जैगृ १, ८ : १२; **अभिजिघ्रेत्** द्राग्र २,३,१४.

**अभि-घ्राय**[c] आग्निगृ २,१, ५ : ३७.

**अभि-जिघ्रण-** -णम् गोगृ २, ८, २४[२].

**अभि-जिघ्य**[c] हिगृ २, ४,१७; गोगृ २,८,२२.

**अभि √चक्ष्**, †**अभिचष्टे** आश्रौ ६, १४, १६; आपश्रौ ९, २, ६; भाश्रौ ९,३,८; माश्रौ ३, २,८; हिश्रौ १५, १, ४५; अप्राय ४, ३; या १०,२२; १२,२७.

**अभि-चक्षे**[d] भाशि ३४†.

**अभि √चर्**, **अभिचरति** वाश्रौ २, १,२,२८; **अभिचरतः** बौश्रौ ७, २ : १०; वैश्रौ १८, ७ : १८; **अभिचरन्ति** आपश्रौ ११, ६, २; भाश्रौ १२, ६, ५; **अभिचरेत्** काश्रौ २२, ११, २९; आपश्रौ; **अभिचरेयुः** शांश्रौ १४,२२,६. **अभिचचार** बौश्रौ १७, ५४ : ४; ५[२]; ६[२]; ७ः **अभिचेरुः** ऋअ २, १०,५६.

१**अभि-चरण**[e]- > **आभिचरणिक**[f]- -कम् काश्रौ १, १०,१४; -केषु आपश्रौ १९,१६,६[g].

**अभिचरणीय, या**[h]- -यः निसू २,३ : १७; -यम् बौश्रौ १८, ३६ : १२; १३; १५; ४८ : १; ३;५;७;१०; -याः शांश्रौ १४, २२,४; लाश्रौ ६, २, १०; क्षुसू १, ४ : ८; २४; -यासु बौश्रौ १४, २० : २६; माश्रौ ५, १, ५,३; -येषु बौश्रौ २, २ : २२; द्राश्रौ १, १, २०; लाश्रौ १, १, १९; ६, ९, १२; ७, १०, ११; बौध १, ६,९; -यैः बौश्रौ १८, ३६ : १; -यौ निसू ७,१२ : १.

**अभिचरणीय-शिल्प**[i]- -ल्पानि बौश्रौ १४,२० : १४.

२**अभि-चर(ण>)णी**[j]- **अभिचरणि (क>) का**[k]- -कासु हिश्रौ २२,२,११[g].

**अभि-चरत्-** -रतः काश्रौ १५, २, १०××; आपश्रौ; -रता बौश्रौ १४,१८ : ११; -रन् आश्रौ २, ११,७××; काश्रौ; -रन्तः अप ४१,३, ३; -रन्तम् बौश्रौ १३, १५ : ३†.

---

*a*) पाभे. वैप १ परि. अभिघारयामि टि. द्र.। *b*) तु. आपमं. प्रभृ.; वैतु. Böht ⌊ZDMG ५२,८७⌋ अभिजिघ्य इति। *c*) सपा. अभिघ्राय <> अभिजिघ्रय (वैतु. Böht ⌊ZDMG ४३, ६००⌋ हिगृ. °जिघ्राय) इति पाभे.। *d*) वैप १ द्र.। *e*) गस. उप. भाप.। *f*) विप. (मन्त्र- ⌊काश्रौ.⌋, कर्मन्- ⌊आपश्रौ.⌋)। तदस्यप्रयोजनमित्यर्थे ठञ् प्र. (पा ५, १, १०९)। *g*) सप्र. आभिचरणिकेषु <> अभिचरणिकासु इति पाभे.। *h*) वैप १, परि. च द्र.। *i*) कस.। *j*) विप. (क्रिया-)। गस उप. करणे ल्युट् प्र.। *k*) स्वार्थिके के प्र. ह्रस्वः।

**अभि-चरितवै** वैश्रौ १८,१ : ३.

**अभि-चर्यमाण-** **-णः** काश्रौ १५, २, ९[a]; आपश्रौ; **-णस्य** शांश्रौ १४,२२,६; काश्रौ २३, ५,२७; माश्रौ ५,१,६,२५; ३०; अशां १७, १;२;१९,२;३.

**अभिचर्यमाण-यज्ञ-** **-ज्ञः** निसू ९,६ : १३.

**अभि[,भी]-चार**[b]- **-रः** माश्रौ १,६, १, २१†; वैश्रौ १८, १ : ३†; अप २८,२, ५; ३६,८,२; बौध २,१,४७; **-रम्** विध ५४,२५; आज्यो २, ४; **-रात्** गोगृ ४, ६,२; अप २, ६, ५; २०,७,५; ३३,२,४; **-रे** अप २१, ३, १; २५, १, ११; २७, १, ३; ३१, ८,४; वाध ५, ४; **-रेषु** वैताश्रौ २,१०.

**आभिचारिक**[c]- **-कम्** कौगृ १,६, ७; शांगृ १, १०, ९; कौसू २५, २७; कप्र ३, ८, ४; अप २८,२, २; शुअ १,८८; ४३८; २,२६९; **-कान्** वैताश्रौ २,१०; अप २३,१३,१; **-के** अप २६, ३,५; शुअ १,४५५;४५९; **-केषु** हिश्रौ २२, १, ३; कौसू ४७,१; अप्राय ६,६?[d].

**अभिचार-कल्प**[e]- **-ल्पः** चव्यू ४ : ८.

**अभिचार-काम-** **-मस्य** वैताश्रौ ४३,२५.

**अभिचार-देश-** **-शाः** कौसू ३९, ३१.

**अभिचार-बल-कर्मन्**[f]- **-र्मसु** विध ३७,२६.

**अभिचार-ब्रह्मवर्चस-प्रतिष्ठा**[g]-काम - **-माः** काश्रौ २,३,५.

**अभिचार-विधि**[e]- **-धौ** अप २५, १,६.

**अभीचारा(र अ)नुव्याहार**[g]- **-रौ** आपध १, २९, १५; हिध १,७, ७२.

**अभि-चारक-** **-कम्** आज्यो १०,५.

**अभिचारिका**[h]- **-काः** बृदे ४, ११८.

**अभि-चारि(न्>)णी**[i]- **-णीः** बैगृ ६६ : १.

**अभि √चि**(चयने), **अभिचिनुयुः** आपश्रौ १९,१५,८; हिश्रौ २३, ३,२९.

**अभि √चुद्**, **अभिचोदयन्ति** ऋप्रा १५,४.

**अभि-चोदित-** **-तः** अप ५८,१,२.

**अभि √च्छद्**, **अभिच्छादयति** आपश्रौ २, ९,३; कौसू ७९, ७; **अभिच्छादयेत्** हिगृ १, १६,६.

**अभि-च्छादयत्-** **-यन्** वैश्रौ ५, ६ : ५.

**अभि-च्छाद्य** आपश्रौ १,१६,११.

**अभि √जन्**, **अभिजायते** विध ५२, १५; ९०, २; २३; अप ३५,१, १३; बृदे ५,१६६; †**अभिजायसे** कागृ ३६,११; शंध २८६.

**अभि-जन**[j]- **-नः** पा ४, ३, ९०; **-नस्य** विध ७१,६; **-नान्** आश्रौ ९,११,१; **-नेन** लाश्रौ ८,६,१.

**अभिजन-विद्या-समुदेत**[k]- **-तम्** आपध १, १, १२; हिध १, १,११.

**अभि-जा(त>)ता-** **-ता** आगृ १, ५,४†.

**अभि √जप्**, **अभिजपति** वैश्रौ २१, १८:५; हिगृ १,१५,६; **अभि...जपति** हिगृ १, १५, ८; **अभिजपेत्** विध ७३,२६.

**अभि √जभ्**, **अभिजञ्भातः** कौसू ९६,३.

**अभि √जि**, **अभिजयति** आपश्रौ ७, १, १; बौश्रौ; **अभि...जयति** आपश्रौ २१, १, १; २२, १५, १; २३, ५; २४, १०; बौश्रौ १४,११ : ३३; वाधूश्रौ ३,२१ : ९; ४, १५ : ११;९० : ५; हिध २, ५, १७८; **अभि...जयन्ति** आपश्रौ २१, १५,१; २३,९,१; १४, ११; हिश्रौ १८, ४, ६५; **अभिजयाम** वाधूश्रौ ३, ३९ : २२; **अभि...अजयत्** वाधूश्रौ ३, २१ : ३; **अभि...अजयन्** वाधूश्रौ ३, २१ : ५; **अभिजयेत्** †बौश्रौ २९,१३ : ६;७; वाधूश्रौ ४, १६ : १३; **अभि...जयेत्** वाधूश्रौ ४, ९० : २; **अभिजयेयम्** बौशु २० : १.

**अभ्यजैषीत्** आग्निगृ ३, ५, ८ : १२; १५; ६,४ : ९;१०; बौपि १,७ : १४; १६; १३ : ९.

**अभि-जिगीषत्-** **-षतः** शांश्रौ १४, ४२,१५.

---

*a*) °भिचार्य° इति पाठः? यनि. शोधः (तु. Web.)। *b*) भाप. > नाप. (श्येनयागादि-प्रयोग-)। *c*) विप. (मन्त्र-, यजुस्-)। तदस्यप्रजोजनमित्यर्थे ठञ् प्र.। *d*) अभि° इति पाठः? यनि. शोधः। *e*) षस.। *f*) द्वस. > षस.। *g*) द्वस.। *h*) विप. (विद्या-)। *i*) विप.। गस. उप. घिनुण् प्र. उसं. (पा ३,२,१४२)। *j*) नाप. ([पूर्वबान्धवोषित-]देश-, बान्धव-)। गस. उप. अधिकरणे अपादाने वा घञ् प्र.। *k*) विप. (संस्कर्तृ-)। द्वस.>तृस.।

१†अभि-जित्[a]- -जित् आश्रौ ८,५, १××; शांश्रौ; -जितः शांश्रौ १३,२१,६××; काश्रौ; -जितम् आश्रौ १०,३, २६××; शांश्रौ; -जिता आपश्रौ १७,२६, १२××; बौश्रौ; -जिति शांश्रौ १२, ६,७; लाश्रौ; -जिते शांगृ १, २६,२०; वैगृ.

१आभिजित- पा ४.३,३६[b]; -तानि[c] द्राश्रौ ८,३,६?[d];१८?[d]; लाश्रौ ४,७,१; ३.

२अभिजित्- पा ४,३,३६.

अभिजित्-पुष्य-सौम्य[e]- -म्येषु अप ३१,५,२.

अभिजित्-प्रतिरूप[f]- -पः क्षुसू २,१ : ११.

अभिजित्-प्रभृति- -ति शांश्रौ १३,१७,३.

अभिजित्-स्थान- -ने काश्रौ १३, २,१६; २४, ४, ५; लाश्रौ १०, १३,४.

अभिजित्-स्वरसामन्[g]- -म्ना निसू ५,१० : ३.

अभिजिद्-द्वादशाह[g]- -हः क्षुसू २,१६ : १६.

अभिजिद्-विश्वजित्[h]- -जितोः आश्रौ ११, ३, २; १२, १, ४; वैताश्रौ ३५,१७; -जितौ आश्रौ ११,२, १९; ५, ५; शांश्रौ १३, १६,२; २९,२३; १६, २०,१८; २५-२६, ३; २८, ३; २९, १६; काश्रौ २२,१,६; २४, २,२; ३, ८;६, २७; आपश्रौ २३,२, २०; द्राश्रौ ८,२,१३; लाश्रौ ४,६,१३.

अभिजिद्-विश्वजिद्-विषुवत्[h]- -वन्ति आश्रौ १२,७,१४.

अभिजिन-मुहूर्त[i]- -र्ते अप १३, १,९.

अभि-जि(त>)ना- -ता कौसू १०६,७†.

अभि-जिति- -त्यै आपश्रौ १४, १९,९†;२२,१,१२; बौश्रौ १४, ४ : २९; हिश्रौ १५, ५,२१†; १७,१,१५; गौध २५,६†.

अभि-जित्य निसू ३,१ : १६.

अभि-जेतुम् निसू ३, १:१६.

अभि-जिघ्रण- अभि √घ्रा द्र.

३अभिजित्[j]- >२आभिजित[k]- -ताः[l] बौश्रौप्र ११ : १.

आभिजित्य- पा ५,३,११८.

अभि √जिन्व्, अभि ··· जिन्वताम् हिश्रौ ६,३,२[m].

अभि √जुष् > अभि-जुष्ट- -ष्टः वैताश्रौ १०,१७†.

अभि-जुह्वत्- अभि √हु द्र.

अभि √ज्ञा, अभिजानाति आपश्रौ १२,५,१××; बौश्रौ; अभिजानात् वाधूश्रौ ४,१०८ : २१.

अभि-ज्ञा- > °ज्ञा-वचन- -ने पा ३,२,११२.

अभि-ज्ञाय आपश्रौ २, १२, ६××; भाश्रौ.

†अभि-ज्ञु[a]- -ज्ञु आश्रौ ४, ७, ४; शांश्रौ १२,२४,२[n].

अभि √ज्वल्, अभिज्वलयति आपश्रौ १, २५, ९; भाश्रौ १, २६, ७; हिश्रौ १,६,५१.

अभि-ज्वलन- -ने बौश्रौ २०,२०:१.

अभि-ज्वलयत्- -यन् भाश्रौ ६, १०,६; वैश्रौ ४, १० : ११.

अभि-ज्वाल्य बौश्रौ २०, २० : २; भाश्रौ ६,१०,९; वैताश्रौ ७,३.

अभि √तप्, अभितपति बौश्रौ २, ९ : ३××; वाधूश्रौ; अभि ··· तपति हिपि १० : १२†; अभ्यतपत् वाधूश्रौ ४,२६:२; बृदे ४, १५; अभितपेत् बौश्रौ १७,३९: २१; आग्निगृ; अभितपेत्ऽअभितपेत् आपश्रौ १, २५,१६.

अभिताप्सीत् पागृ ३,६,३; शुप्रा ४,७२.

अभितापयति भाश्रौ १, २, ३, २७; ६,१,१७.

अभि-तपन[o]- -नः शुअ १, २९०[p].

अभि-तपस्[q]- -पाः ऋअ २, १०; ३७[p].

अभि-तप्त- -प्तः आश्रौ २, ७,१७, -प्ताः सु ९, १.

अभितप्त-तर- -रम् आश्रौ १२, ८,१६.

अभि-तप्य काश्रौ २, ५, २६; आपश्रौ १, २५, १४; बौश्रौ १, १० : १३; भाश्रौ १, २६,१०; वैश्रौ ४,१० : १५; बृदे ६,१२.

अभि-तापन- -नम् भाश्रौ १, ६, १, २४.

---

*a*) वैप १, परि. च द्र. । *b*) तत्रजातीयः अण् प्र. । *c*) तस्येदमीयः अण् प्र. (पा ४,३, १२०) । *d*) अभि° इति पाठः? यनि. शोधः । *e*) नक्षत्राणां द्वस. । *f*) विप. (बृहत्पृष्ठ-) । बस. । *g*) मलो. कस. । *h*) द्वस. । *i*) षस. । *j*) व्यप. (ऋषि-विशेष-) । व्यु.? । *k*) तस्यापत्यीयः अण् प्र. । *l*) बहु. <आभिजित्य- । *m*) सपा. अभि ··· जिन्वताम् <> अभि ··· पिन्वताम् <> अभि ··· आगात् इति पाभे. । *n*) पाभे. वैप १,३४३ f द्र. । *o*) व्यप. (सूर्य-) । गस. उप. कर्तरि ल्युः प्र. । *p*) सपा. °पनः <> °पाः इति पाभे. । *q*) व्यप. (सूर्यपुत्र-) । गस. उप. कर्तरि असिः प्र. डसं. (पाउ ४,२२७) ।

अभि-ताप्य वाश्रौ १,३,१,२६;२९.
**अभि-तरम्**[a] आपश्रौ २,१७,५.
**अभि-तराम्**[a] आपश्रौ ६,८,४; वाधूश्रौ ४, ३० : १७;१८.
**अभितष्टीय**[b]– -यम् शांश्रौ १२,६,१; १३,२४,१८; या १२,४०.
**अभि-तस्(:)** आश्रौ ३, ६, ९××; शांश्रौ.
अभितो(तस्-अ)नवसर्पण– -णाय बौश्रौ १०,३३ : ५.
अभितो √भू >°तो-भाविन्[c]– -वि पा ६,२,१८२.
**अभि √तृद्**, अभितृन्धि बौश्रौ १०, २४ : १२; अभ्यतृणत् या १०, १३; अभि ˙˙ अतृणत् या १०, १३†.
अभि˙˙ ततर्द शांश्रौ १८, ५, १†[d].
†अभि˙˙˙तर्दः आश्रौ ५,५,१९; शांश्रौ १४, ११, ८; २३, ३; †अभि (तर्दः) आश्रौ ८, ७,२२; ९,८,६; शांश्रौ ७, १७,५; ११, १०,१०.
**अभि √तृप्** > †अभि-तर्पय(त्>) न्ती– -न्तीः आग्निगृ ३, १,३ : १८; भागृ २,१३ : १२; हिगृ २,१२,१०; कौसू ८८,२४.
**†अ-भित्ति**– -त्यै आपश्रौ १६,५, ३; ११; बौश्रौ १०, ७ : ३; १३ : ११; वाश्रौ २, १, १,४४; वैश्रौ १८, १ : ७४; हिश्रौ ११, १, ६६.
**अभि √त्रस्** > अभि-त्रास– -सः आपध १,८,२९[e].
अभित्रासो (स-उ)पवासो(स-उ)-दकोपस्पर्शन[f]– -नानि हिध १, २,११७[e].
**अभि-दक्षिण**[g]– -णम् काश्रौ ६, ३, २४; आपश्रौ १९,१५,३; वाश्रौ १,१,४,२४; द्राश्रौ ४, १,१०; ९,४,३; १५,४,१६; लाश्रौ ५, १२,२०; काग्र २५,२८; ५४,४; मागृ १,१०,१६; २२,१२; कौसू १,१९; ६,१५; ६९,२३.
**अभि √दह्**, अभिदहेत् आपध १, २८,१५; हिध १,७,५०.
अभिदह्येत् माश्रौ ३, ६, २२; अभिदह्येरन् आपश्रौ १४, २५, १; हिश्रौ १५,६,२१.
अभिदाह्येत् वाध २०,४२.
अभि-दग्ध– -ग्धानि बौश्रौ २९, १ : १; –ग्धे शांश्रौ १३, ६, ७; आपश्रौ १४,२५, ३; आपध १, १७,१०; हिध १,५,४२.
**अभि √दा**(दाने), अभिददाति वैश्रौ २१,१८ : ६.
†अभि-दद्[h]– -दिम् आपश्रौ १३, १४, ३; बौश्रौ ८, १४ : ११; वैश्रौ १६,१७ : २; हिश्रौ ९,४, ११.
**अभि √दास्**(हिंसायाम्), अभिदासते अप ४८, २४; †अभिदासति शांश्रौ ४,२१,२××; आपश्रौ ४, ११, ५[i]; ६, १८, ३[i,j]; बौश्रौ; †अभिदासत् आश्रौ ४, ६, ३; आपश्रौ ४,७, २; १४, २९, ३; माश्रौ; अभिदासात् हिश्रौ ६, ६, १७[i,j]; कौसू ४९,७.
†अभि-दासत्– -सतः आपश्रौ २०, २०, ७; हिगृ १, १२, २; –सते बौश्रौ ३, १८ : १; भाश्रौ ४, १२, ७.
**अभि √दिह्**, अभिदिह्यात् आपश्रौ १५,१७,८.
अभिदिह्येत् भाश्रौ ११,१७,१०.
**अभि √दी** (दीप्तौ), अभि (दिदीहि) साग्र १,५७९†.
**अभि √*दीधि** (दीप्तौ)[h], †अभि (दीधय) आश्रौ ७, ४,९; शांश्रौ १२,५,३; ऋअ २, ३,३८.
**अभि √दु**(उपतापे) >अभि-दू-(न>)ना[k]– -नाः बौश्रौ १८, १२ : १३.
**अभि √दुह्**, अभिदोग्धि बौश्रौ १४, २३ : १९; हिश्रौ २४, १,१०; अभिदुहन्ति आपश्रौ १,१३,१२; भाश्रौ १, १, ४; †अभिदुह्यात् बौश्रौ १४,२३ : १८; हिश्रौ १५, २,७.
अभिदोहयति आपश्रौ १५, २, २; भाश्रौ ११,२,१०.
अभि-दुग्ध– -ग्धम् वैश्रौ ३,८ : ५; हिश्रौ १, ३,५१.
अभि-दुह्य भाश्रौ ९, ७, ७; ८; वैश्रौ २०, ९ : १३.
अभि-दोहन– -नम् आपश्रौ १५,२,

---

*a*) वा. क्रिवि.। *b*) नाप. (सूक्त-विशेष-)। अभि तष्टा (ऋ ३,३८,१)+ मत्वर्थे छ>ईयः प्र. (पा ५, २,५९)। *c*) विप.। उस. उप. आवश्यके णिनिः प्र. (तु. पाशे. प्रभृ.; वैतु. पाका. प्रभृ. मत्वर्थे प्र. इति)। *d*) सपा. तैब्रा २,७,१३,२ वि˙˙˙बिभेद इति पाभे.। *e*) सप्र. °स उप°<>°सोप° इति पाभे.। *f*) द्वस.। *g*) अस. वा. क्रिवि.। *h*) वैप १, परि. च द्र.। *i*) पाभे. वैप २,३खं. अभिदासति तैब्रा २,४,१,२ टि. द्र.। *j*) पाभे. वैप १ परि. अभिदासति काठ ७, २[१] टि. द्र.। *k*) विप. (ओषधि-)। गस. उप. कर्मणि क्त>नः प्र. दीर्घश्च (पावा ८, २,४४)।

३; भाश्रौ ११, २, ११; हिश्रौ २४,१,११.

अभि-दोह,ह्या[a]– -ह्यम् आपश्रौ ९,५,८; ९; ६,२;४;५; काश्रौसं ३१ : ९; वैश्रौ २०, १० : ८; १०; –ह्या भाश्रौ ९,८,५[b].

**अभि-दूना–** अभि√दु द्र.

**अभि√दृह् >** अभि-दृढ– -ढम् वाधूश्रौ ४,२८ : ४.

**अभि√दृश् >** अभि-द(दृश्य>)श्या– -श्याः बौश्रौ २६,२ : ३.

**अभि-दो**(षा>)ष[b]– -षम् भाश्रौ ११, २२,९.

**†अभि-द्यु**[c]– -द्यवः आश्रौ १,२,७;७, ८,१; बौश्रौ १,१५ : २;३,२७ : १९; १०,११:१; माश्रौ १,५,१, २४;६,१,३,३; वाश्रौ १, ४,१, १०; हिश्रौ ३,२,५३;२१,१,९.

**अभि√द्युत्**, अभिद्योतयति बौश्रौ ३, ५ : ४; वाधूश्रौ ३,२४ : ७; २५ : ८.

अभि-द्योतन– -नम् बौश्रौ २, १८ : २८;३,४:१६;–नेन बौश्रौ ३,५: ४; बौगृ १,३,११; बौपि २,९,४.

अभि-द्योत्य बौश्रौ ३, ५ : ६; वैश्रौ २,३ : २; ३; बौगृ १,३, ११[२]; बौपि २,९,४[२].

**अभि√द्रु**, अभिद्रवति बौश्रौ ११,३ : ३; जैश्रौ १ : २१; अभिद्रवन्ति अप ६७,३,३; या ८,१[२]; अभिद्रवेत् जैश्रौ १ : १९.

अभि-द्रवण– -णम् आग्निगृ ३, ८, २ : २७.

अभिद्रवणीय– -यम् या ४,९.

अभि-द्रुत्य आपश्रौ १, २०, १२; १२,२१,५; जैश्रौ १ : २०.

**अभि√द्रुह्**, †अभिदुद्रोह आपश्रौ ७,२१,६; बौश्रौ.

†अभि-द्रुग्ध– -ग्धः पागृ ३, १२, ९[२]; आग्निगृ २,७,५ : ५;६; वैगृ ६,९:५[d]; बौध २,१,३३[२];४,२, १०[२]; गौध २५,४[२]; भाशि १७.

अभि-द्रुह्य बौश्रौ १३, ९ : ७; माश्रौ ५,१,५,८०.

अभि-द्रोह– -हम् तैप्रा १२,७†.

अभि-ध्रोक्ष्यत्– -क्ष्यन् माश्रौ ५, १,५,२८.

**अभि√धम् >** †अभि-धमत्– -ϕमन्ता, –मन्तौ या ६,२६ϕ.

**अभि√धा**[e], †अभिधेतन[f] अप ४८, ११५; निघ ४,३; या ६,२७ϕ. अभिदधाति आपश्रौ १, १२, ९; १५, ९, ५ ××; बौश्रौ; अभिधत्तः बौश्रौ १५,५: ८; †अभि(दधामि) कौसू ७९,७; अअ ७, ३७; अभि···धत्ताम् अशां १५, ५†; †अभिधेहि वाश्रौ १,६,५, १०; गोगृ ४,१०,१९; जैगृ १, ४ : ४; कौसू ६२, २१; अभिदध्यात् आपश्रौ १९, १९, ३; बौश्रौ २०, २७ : १६; भाश्रौ ७, १३, ८; हिश्रौ २२, २, २६; आग्निगृ ३, ८, १ : २७; अभिदध्युः शंध २१८.

अभिधास्यते अप २४, १, १०; अभिधास्ये विध १९,२४; अभि (अधित) शुअ २, ४६१†; †अभि···अहित वैताश्रौ ३६, १९;†अभि(अहित) अअ ३,११; अपं ३: २६; अभ्यधाताम् या ३, १४; †अभ्यधीताम् या ३,१४ϕ; †अभि···अधाम् आपमं १,१५, ६; कौसू ३६, २०; अअ ३,१८.

अभिधीयते शांगृ १,२,५; बौगृ; अभिधीयसे विध १०,१०.

अभिधापयीत आगृ ३,८,१८.

अभिधित्सति आपमं १,१७,८[g].

†१अभि-धा[c]– -धाः काश्रौ २०, १,२६; आपश्रौ २०,३,५; बौश्रौ १५,५ : ३; वाश्रौ ३,४,१,१४; हिश्रौ १४,१,२८.

२अभि-धा[h]– -धानाम् बृदे १,१२.

अभि-धान[i]– -नम् आश्रौ ४, १,९; बृदे; या १,२०; पावा १,२,६४[४]; २,२,२९[२]; मीसू; –नयोः मीसू ४,४,३४; –नस्य बृदे ३,७७; या ७,१३; मीसू ८, ३,१०;१०,४, ३३; –नात् काश्रौ १, ३, ५; पावा १,२,६४; ४,१,४८; मीसू ६,८,३७; ७,३, ३३; –नानाम् बौश्रौ १५,२० : ७; वाधूश्रौ ३, ७८ : ३; –नानि या ७,५;६; –ने बौश्रौ २०,२७ : १५; पावा ४, ३, १५३; मीसू १,२, ४६; –नेन ३, ७,८; –नेषु मीसू ७, १,९; –नैः या ७,१३.

†अभिधानी[c]– -नी आपश्रौ १,१२,८;१८,१०,२१; वाधूश्रौ; –नीम् आपश्रौ १, ११, ५××; भाश्रौ; –न्या वैश्रौ १३,११ : ८.

अभिधानी-भाजन[j]– -नम् वाधूश्रौ ३,६९ : ३६.

---

*a*) वि२. । गस. उप. ण्यत् प्र. । *b*) अस. वा. किवि. । *c*) वैप १, परि. च द्र. । *d*) वैतु. C. पूर्वेण समस्तमिनीव । *e*) उपसृष्टस्य धा. वचन-बन्धनादिषु वृत्तिः । *f*) तु. वैप १, ३४६ a । *g*) पाभे. वैप १ परि. अभिनि्रस्सते ऋ १०, ८५, ३० टि. द्र. । *h*) नाप. (वृत्ति-विशेष-)। भावे अङ् प्र. । *i*) गस. उप. करणाद्यर्थे ल्युट् प्र. । *j*) नाप. । षस. उप. भाप.।

अभिधान-त्व- -त्वात् मीसू ७,४,७.
अभिधान-प्रोक्षण-वपोत्खेदना-(न-अ)भिघारण[a]- -णेषु वाश्रौ १,६,४,६.
अभिधान-लक्षण-त्व- -त्वात् पावा ३,३,१९.
अभिधान-वत् मीसू ७,१,८; ४,७; ८,१,२.
अभिधान-वाचिन्- -ची मीसू २,१,२९.
अभिधान-शब्द- -ब्देन मीसू ७,२,१.
अभिधान-संयोग- -गात् मीसू ४,२,२१: १०,६,५२.
अभिधान-संस्कार-द्रव्य[b]- -व्यम् मीसू १०,१,२.
अभिधान-स्तुति- -तयः ऋअ १,२,१३.
अभिधाना(न-अ)र्थ- -र्थम् पावा २,१,५१.
अभिधानो(न-उ)पदेश- -शात् मीसू ७,३,३५.
अभि-धाय बौश्रौ ११,३ : ३२;३३; भाश्रौ ६,८,१५; वाश्रौ १,६,६,१५; मीसू १०,८,३१.
अभि-धायक- -काः बृदे ५,९४.
अभि-धीयमान,ना- -नायाम् शांश्रौ ५,१०,३; -ने जैश्रौ २३ : ८.
अभि-धेय- -यः बृदे २,१०२; -यस्य पावा ४,२,५२; ६६; -याः माशि ११,४; -येन अअ ८,१.
अभिधेय—व्यक्ति-वचन-भाव- -वात् पावा १,२,५१.
अभि-हित,ता- -तः बौश्रौ १२,२ : १३; अप्राय ३,२; कौशि ३२; -ता विध ९,१२; -तानि शंध १०६; -ते पावा १,४,५१; २,३,१[2]; ३,१,६७.
अभिहित-गुण-संपन्न- -न्नः विध ८,९.
अभिहित-तम,मा- -मम् माश्रौ १,२,६,८; -माम् माश्रौ १,२,६,१६.
अभिहित-त्व- -त्वात् पावा २,२,२४.
अभिहित-दण्ड-प्रयोग- -गः विध ५,९०.
अभिहित-लक्ष (ण>) णा[c]- -णायाम् पावा २,३,४६.
अभिहिता(त-अ)नभिहित- -ते पावा २,३,४६.
अभिहिता(त-अ)र्थ-त्व- -त्वात् पावा २,२,२५.
अभि√धाव् (गतौ), अभिधावति वाध १,१५; अभिधावसि सु २१,३; अभिधावत या ६,२७; अभ्यधावत् बृदे ६,१२; अभ्यधावन् बृदे ८,१३७; अभिधावेत् अप्राय १,३; वाध २०,४१.
अभिधावयन्ति बौश्रौ १५,५ : १४; २४ : १२; अभिधावयातै बौश्रौ १५,६ : १०.
अभि-धावत्- -वन् वाश्रौ ३,३,२,४२; पागृ २,५,३०.
अभि-धाव्यमान- -ने बौश्रौ १५,६ : १०.
अभि√धू, अभिधूनोति वैश्रौ १३,१० : ७.
अभि-धून्वत्- -न्वन्तः आपश्रौ १४,२२,१; कौगृ ५,२,९; हिपि २:१४;१४:११; गौपि १,२,४०.
अभिधून्वती- -त्यः आपश्रौ २०,१७,१३.
अभि√ध्यै, अभि···ध्यायति वाधूश्रौ ४,३० : १७?[d]; अभ्यध्यायत् वाधूश्रौ ४,३० : १६; ऋअ २,१,५१; अभ्यध्यायन् निसू ५,५ : ३५; अभिध्यायेत् आपश्रौ ४,१३,६; बौश्रौ २०,२४ : ३४; भाश्रौ ४,१९,२; वैश्रौ ७,८:२; हिश्रौ ६,३,२२; अप २७,१,५[2].
अभिदध्यौ बौश्रौ १८,४४ : २.
अभि-ध्यात- > °त-तम- -मानि लाश्रौ ८,४,१३.
अभि-ध्याय शांश्रौ १६,२९,७; शुअ १,१.
?अभिध्रुवम्[e] निसू १,७ : ३२.
अभि-ध्रोक्ष्यत्- अभि√दुह् द्र.
अभि√ध्वंस्, अभिध्वंसयति भाश्रौ ११,१५,२३.
अभि-नद्ध- अभि√नह् द्र.
अभि√नन्द्, अभिनन्दन्ति वाध ११,४१; अभिनन्देत् वैश्रौ १२,३:६. अभिनन्दयेत् विध ६३,३९.
अभि-नन्द[f]- -न्दम् निसू ३,१३ : २३.
अभिनन्द-ब्राह्मण[g]- -णम् निसू ९,१३ : ३८[h].
अभि-नन्दत्- -न्दन् अप १,२६,३.
अभि√नम्, अभिनमन्त या ७,१७. अभिनंस्यति वाश्रौ ३,२,६,२२; अभिनंस्यामि वाश्रौ ३,२,६,२२†.

a) द्वस. । b) षस. पूप. द्वस. । c) बस. । d) °तेति इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि.)। e) पाठः? अभिद्रुत- > -तम् इति शोधः (तु. संस्कर्तुः टि. अभिद्रुतम्? इति)। f) नाप. (ब्राह्मणग्रन्थ-विशेष-)। उस. उप. कर्तरि कृत्। g) कस.। h) °न्द्राह्मा° इति पाठः? यनि. शोधः।

अभिनमयेत् बौश्रौ २६, ३२ : १२.

अ(भि>)भी-नाम[a]- -मम् बौश्रौ २०,१८ : १७; २३,१९ : १५.

**अभि-नव**[b]- -वम् अप्राय २, ५†; अप ३७,५,८.

**†अभि √नश्** (व्याप्तौ), अभि(नशत्) ऋप्रा ५, ३; अभ्यानट् या १२, १८ø.

**अभि √नश्** (अदर्शने), अभिनाशयाम अप १[२],१,६.

**अभि √नह् >** अभि-नद्ध- > °द्धा-(द्ध-अ)क्ष[c]- -क्षः निसू ४, २ : २७.

अभि-नह्य माश्रौ २,२,२,१३.

**अभि-नि √क्रुप् >** °नि-क्रुष्ट- > °ष्ट-गीति[d]- -ति निसू ७,१२:१८.

**अभि-नि √गद्**, अभिनिगदति कौसू ३९, २७; ४४,६.

अभिनि-गदन- -नात् कौसू ७१, १३.

अभिनि-गद्य कौसू ६३, २०; २२; २८; ६६, २०; २७.

**अभि-नि √ग्रह्**, अभिनिगृह्णाति माश्रौ १०,१५,७.

अभिनि-गृह्य हिश्रौ २१,२, ५४.

**अभि-नि √दृश्**, अभिनिदर्शयति बौगृ ३,४,२२.

**अभि-निधन**[d]- -नम् शांश्रौ १३, ५, १४; काश्रौ २५, १४, १४; क्षुसू १,४ : ४; २, १० : २०; ११ : १८.

**अभि-नि √धा**, अभिनिदधाति काश्रौ २, ८, ११; माश्रौ; †अभिनिदधामि आपश्रौ ५,१२,२; १३, ८××; माश्रौ; आपमं २, २१, ३१[e]; अभिनिदध्यात् आश्रौ १, १२, ३४; आपश्रौ ९, २, ९; भाश्रौ ९, ४,१; माश्रौ.

अभिनि-दधान- -नः भाश्रौ ४,३,५.

अभिनि-धान[f]- -नः तैप्रा १४, ९; ऋत २,३,१; शौच १,४३;४४; -नम् काश्रौ ५,१, २५; आपश्रौ १,२३,४; ऋप्रा ६,१७; -नात् ऋप्रा ६, ३९; -नानाम् माशि १२,१; -ने काश्रौ २५,३,१३.

अभिनिधान-भाव- -वम् ऋप्रा ६,३१.

अभिनिधान-लोप- -पः ऋप्रा ६, ४३.

अभिनि-धाय काश्रौ ६, ६, ८; ७, २, ९; आपश्रौ १, २३,३××; काठश्रौ.

अभिनि-धीयमान- -नम् भागृ २, १९ : ४.

अभिनि-हित- -तः ऋप्रा २-३, ३४[g]; शुप्रा १,११४;१२५; शौच ३,५५; शैशि २३३;२३५; माशि ७,२; ८, २; ५; याशि १, ७६; -तम् शांश्रौ १२, १३, ५; निसू १,७ : ३२; शांगृ ६,५,१; माशि ७,३; याशि १,७९; -तात् ऋप्रा १३, २६.

अभिनिहित-त्व- -त्वम् भासू १, १९.

अभिनिहित-प्राश्लिष्ट-जात्य-क्षैप्र[h]- -प्राणाम् शौच ३, ६५.

**अभि-नि √नी >** अभिनि-नीय वैश्रौ ६,२ : ७.

**अभि-नि √पत्** (गतौ), अभिनिपतेत् आपगृ २३, ८[१]; भागृ २, ३० : १३[i].

**अभि-नि √म्रुच्**, अभिनिम्रोचति बौश्रौ १४, २४ : २; ४; १०; १२, वैश्रौ २०,१२ : ३; अभिनिम्रोचेत् आपश्रौ ५, २९,१३; ९,६,१२;१४××; बौश्रौ.

अभिनि-म्रुक्, क्ता- -क्तः आपश्रौ १०,१५,६; बौश्रौ २८,९ : २७; वैश्रौ १२, ११ : ९; २०, २६ : ८; २१, २ : ११; -क्ता बौश्रौ १३, १ : ७[j]; -क्तात् बौश्रौ ६, ६ : ५; -क्ते बौश्रौ २७,५ : ७.

अभिनिम्रुक्ता (क्त-अ)भ्युदित-कुनखि-श्यावदा(द-अ)ग्रदिधिषु-दिधिषूपति-पर्याहित-परीष्ट-परिवित्त-परिविन्न ⌊परिवेत्तृ-परिवित्ति[k]-⌋ परिविविदान[h]- -नेषु आपध २,१२,२२; हिध २, ४, ५९.

अभिनिम्रुक्ता (क्त-अ)भ्युदित-पर्याहित-परीष्ट-परिवित्त-परिविन्न-परिविविदान[l]- -नः आपश्रौ ९,१२,११.

**अभि-नि √म्लुच्**, अभिनिम्लोचेत् अप्राय ४,४; ५,१.

**अभि-निर् √अस्** (क्षेपणे), अभिनिरस्यति कौसू २९, ६; ३२, २४.

---

*a*) गस. उप. घञ् प्र. । वा. क्रिवि. । *b*) विप. (बर्हिस्-) । प्रास. । *c*) विप. । बस. उप. =अक्षि- । *d*) नाप. (साम-विशेष-) । बस. । *e*) सपा. अभिनिदधामि <> अभितिष्ठामि <> अभ्युपविशामि इति पाभे. । *f*) भाप. (काश्रौ. आपश्रौ.), नाप. (तदाख्यसंधि-विशेष-) । गस. उप. कर्माद्यर्थे ल्युट् प्र. । *g*) नाप. (स्वरितभेद-विशेष-) । *h*) द्वस. । *i*) सपा. अभिनिपतेत् <> अभिपतेत् इति पाभे. । *j*) नाप. (इष्टि-विशेष-) । *k*) हिध. पाठः । *l*) द्वस. > मलो. कस. ।

**अभि-निर्√ऊह्** (प्रापणे), अभिनिरूहति बौश्रौ १५,१९ : ६.
**अभि-निर्√जि >** अभिनिर्-जित्य माश्रौ ५,१,५,६७.
**अभि-निर्√दिश्**, अभिनिर्दिशेत् बौश्रौ २२,९ : १३; द्राश्रौ १३, ३,४; अप ६१,१,४; शंध १३८; मीसू ११,७,५.
अभिनिर्-दिश्य बृदे ७,१०१.
**अभि-निर्√वप्**, अभिनिर्वपति बौश्रौ ८,२१ : २.
अभिनिर्-उप्य मागृ १,११,२.
**अभि निर् √वृत्**, अभिनिर्वर्तयेत् गोगृ २,९,१९.
अभिनिर्-वृत्त- -त्तः आशि ८,२३.
अभिनिर्-वृत्ति- -त्तेः पावा ६, १, ८३.
**अभि-निर्√हृ >** अभिनिर्-हृत- -तानाम् आपध १, ९,१६; हिध १,३,१६.
**?अभिनिवर्तीशा**[a] वाधूश्रौ ४,८२ : २.
**अभि-नि√वप्**, अभिनिवपति बौश्रौ २४,३ : ४.
**अभि-नि√विश्**[b]**>** अभिनि-विष्ट- °ष्ट-क[c]- > °ष्टक-वर्जम् मागृ २,१३,५.
**अभि-नि √वील्**(ळ्) **>** अभिनि-वील्ह(ळ्ह)[d]- -ल्हम् शांश्रौ १७, १०,१५.
**अभि-नि√वृत्**, अभिनिवर्तते वाधूश्रौ ४,९८ : २२; आग्निगृ ३, ४,४ : ८; अभिनिवर्तन्ते बौश्रौ १५, २० : ९; २०,१० : ३४; अभि-···निवर्तताम् या १२, ३९†; †अभि···निवर्तध्वम् आपश्रौ ४, १०,४; भाश्रौ ४,१५, ३; हिश्रौ ६, ३, २; अभिनिवर्तेत बौश्रौ २४, ७ : ५; ७; अभिनिवर्तेरन् बौश्रौ २०,१० : ३५.
**अभिनि-वर्तम्** वाधूश्रौ ४,९८:२;२१
अभिनि-वृत्य क्षुसू २,२ : ९.
**अभि-नि√श्रि**, अभिनिश्रयते बौश्रौ १२, १२:१०; १३:२४; अभिनिश्रयध्वम् बौश्रौ ११,१०:२†; अभिनिश्रयेत् आपध २,२२,४;२३,२.
**अभि-नि√षद्**, अभिनिषीदतु भागृ १, १८ : ९; जैगृ १, २२ : ८; अभिनिषीदेत् आपश्रौ ९, ११, २४; १४, ३१,१; १५,१८, ८; १६,१२,११.
**अभि-नि(स्>)ष्√क्रम्**, अभिनिष्क्रामति पा ४,३,८६.
अभिनिष्-क्रम्य अप ८,१,२.
अभिनिष्-क्रामत्- -मतः वैगृ ५, १ : २४.
**अभि-नि(स्>)√ष्टु(<स्त)न्**(शब्दे)[e]
अभिनि-ष्टान[f]- -नः शौच १,४२.
अभिनिष्टाना(न-अ)न्त[g]- -न्तम् आगृ १, १५, ४; कौगृ १, १६, ९; वैगृ ३,१९ : ५[h].
**अभि-नि √ष्ठी(<ष्ठि)व्**, अभिनिष्ठीवति कौसू ३१,१७; ३६,३०.
**अभि-निः√सृप्**, अभिनिःसर्पन्ति आश्रौ ५,११,१.
**अभि-निः√स्तन्** पा ८, ३,८६.
**अभि-निः √स्रु**, †अभिनिःस्रवन्तु मागृ २,९,४.
**अभि-नि√हन्**, अभिनिघ्नते आग्निगृ १, ३, २ : ३[i]; अभिनिहन्यात् आपश्रौ ९,२०,१०.
अभिनि-हत[j]- -तः तैप्रा २०, ४; कौशि ८; -ते तैप्रा २०,१०.
अभिनिहिता(त-आख्या-) ख्य- -ख्यः कौशि १४.
**अभि√नी**, अभि···नय आश्रौ २, १०,१४.
अभि···नेत्रः कौसू ४,२.
अभि-नीय बौश्रौ २८,४ : १७;१९; २१; २४;२६.
**अभि-नी**(नि√इ), अभि···न्येतु ऋप्रा ८,४२†.
**अ-भिन्दत्-** -न्दन् वैश्रौ ५, ८ : ९; हिश्रौ १,८,२३.
**अ-भिन्न,न्ना-** -†न्नः आश्रौ ३,१४, १०; आपश्रौ ९,१३,९; बौश्रौ ३, १५ : १४; भाश्रौ ९, १६, २; माश्रौ ३,१,२४; वैश्रौ २०,२८ : ३; हिश्रौ १५,४,८; बौगृ ४,१, ५; -न्नाः आपश्रौ १६, १३, ८; -न्ने काश्रौ १८, २, ५; -न्नेन काश्रौ २६,७,४८.
अभिन्न-काल[k]- -ले शांश्रौ १,१६,५.
†अभिन्ना(न्न-अण्ड>)ण्डा[g]- -ण्डा मागृ २,१८,२.
अभिन्ना(न्न-अ)न्त[g]- -न्तम् हिश्रौ १३,३,२१.

*a*) पाठः? अभि√नी (भावे)> अभि-नि- (=अभि-नय-)>°नि-व(त<)ती-> -तीम् (पृथिवीम्) इति, सा (वृष्टिः) इति द्वि-पदः शोधः (वैतु. संस्कर्तुः टि. अभिनिवर्तान् सा इति ?)। *b*) पा १,४,४७ परामृष्टः द्र.। *c*) विप.>नाप. (गणाज-)। स्वान्तात् स्वार्थे कः प्र.। *d*) तु. ऋप्रा १,५२। *e*) षत्वं द्र. (पा ८,३,८६)। *f*) नाप. (विसर्जनीय-)। गस.। *g*) विप.। बस.। *h*) °निष्ठान्तम् इति पाठः? यनि. शोधः (वैतु. भाष्यकृद् अन्यथा-दर्शुकः [तु. C.])। *i*) सप्र. बौगृप १, १३,१० अभिनिघ्नन्ति इति पाभे.। *j*) नाप. (स्वरितभेद-विशेष-) *k*) विप. (अर्थ- [प्रयोजन-])। बस.।

**अभि-न्य**(नि√अ)**स्** (क्षेपणे), अभिन्यस्यति काश्रौ २,६,१५; कौसू १८,१०; अभिन्यस्येत् माश्रौ २,१,४,१४.

**अभि-न्यु**(नि√उ)**ब्ज्**, अभिन्युब्जति कौसू **४१**,४; **४८**,४०.

अभिन्युब्जयेत् अप **१३**,३,९.

**अभि√पत्**(गतौ), †अभ्यपतत[a] मागृ २,३० : १४; १७, हिगृ १,१६,६; ७; अभिपतेत् हिगृ **१**,१६,७[b].

अभिपेततुः बृदे **४**, ६७; **७**, ८८, अभ्यपसत्[a] आपमं २,२२, ११; १३ : अभ्यपसाम वाधूश्रौ **४**,३७ : ११.

अभि-पात्य बौश्रौ **६**,२ : २३; **२१**, ८ : २५.

**अभि√पद्**, अभिपद्यते हिश्रौ १,२,३०; अभिपद्येत बौश्रौ **२०**,२५ : २६; भागृ **२**,२७ : ९.

अभिपत्स्यते वाधूश्रौ **३**,७५ : ११.

अभि-पद्य भागृ **१**,७ : १०; ९ : १४; बौध २,६, ३४; ऋप्रा **७**,९†.

अभि-पद्यमान- -ने माश्रौ **५**,१०,१

अभि-पाद्य बौपि **१**,५ : ३.

?**अभि-पद-** -दे मेश **२३९**.

**अभि-परि√कृप्**>अभिपरि-कर्पत्- -र्पन् माश्रौ **५**,२,३,१०; २२.

**अभि-परि√गृह्**, अभिपरिगृह्णीते माश्रौ २,४,२,८.

अभिपरि-गृह्णत्- -ह्णन् माश्रौ १,३,२,१२.

अभिपरि-गृह्य माश्रौ २, १, ३,३१; ३९; मागृ **१**,१०,६.

?**अभि-परिमित**[c]- -तम् वाधूश्रौ **४**, ९० : २७.

**अभि-परि√लिख्**, अभिपरिलिखेत् बौश्रौ **२३**,१४ : १०.

**अभि-परि√स्तृ**, अभिपरिस्तृणाति वागृ **१**,१८.

**अभि-परि√हृ**, अभिपरिहरति आश्रौ ८,५,१२; बौश्रौ ८, ९ : ७; **१४**, १९ : २; हिश्रौ **१**,१,५४; **७**,८, ६२; अभिपरिहरेत् आपश्रौ **११**, २१,२; **२४**,२, १४; माश्रौ **१**, १,१५[२]; बौध **१**, ७, ७; अभिपरिहरेयुः माश्रौ २,२,५,३१.

†अभिपरिहारिषम बौश्रौ **६**,३३ : २; **७**,७ : १६; **२५**,२० : १०.

अभिपरिहारयेरन् आश्रौ **४**, १२,८.

अभिपरि-हरण- -णम् अप **४४**, ४,५.

अभिपरि-हरत्- -रन् द्राश्रौ **१**, २, १९.

अभिपरि-हरमाण- -णः बौश्रौ **२५**, १२ : १६.

अभिपरि-हृत्य बौश्रौ **७**,७ : १७.

**अभि-परी**(रि√इ)>अभिपरी (रि-इ)त- -ताः निसू **६**,९ : १८; -तौ निसू **६**,९ : १३.

अभिपरी(रि-इ)त्य निसू **२**,१३ : ३९.

अभिपर्य(रि-अ)य- -यन् निसू **६**, ९ : १८.

**अभि-पर्यग्नि**[d]- -ग्नि बौश्रौ **५**,५ : १८; **२५**,११ : १९.

अभिपर्यग्नि√कृ>°ग्नि-कृत- -तम् बौध **२३**, १४ : १५; -तानि बौश्रौ **५**,७ : ९; **१०**,११ : १७; -ते आपश्रौ **७**,१६,२.

अभिपर्यग्नि-कृत्वा बौश्रौ **१७**, ५६ : ११; ५९ : १४; ६२ : ३; **२६**,२५ : १३.

**अभि-पर्या** (रि-आ) **√वृत्**, अभिपर्यावर्तते आपश्रौ **१**, २, ९; ९, ११; **१८**,५,१९; बौश्रौ; अभिपर्यावर्ते बौश्रौ २८,९ : २०†[e]; अभिपर्यावर्तेत वाश्रौ **३**, १, २, १८; बौध **१**,७,१३; अभिपर्यावर्तेरन् बौश्रौ **२७**,२ : १; बौध **१**,७,१२.

अभिपर्या-वर्तमान- -नः द्राश्रौ **७**,२, १८; लाश्रौ **३**,२, १३; गोगृ **४**, ३,१२; द्रागृ **३**,५,१९.

अभिपर्या-वृत्य आश्रौ २, ७, २; बौश्रौ **३**, १० : २४ ८, १७ : ११; २०,६ : ९; माश्रौ **१**, ९, ५; **४**,२१,५; वाधूश्रौ **४**, ८५ : १२; ५३[२] : ५; आग्निगृ **३**,५,५ : ४; बौपि **१**, ८ : ४; भागृ **२**, १३ : ८.

**अभि-पर्यु** (रि√उ) **क्ष्** > अभिपर्यु-(रि-उ)क्षत्- -क्षन् गोगृ **१**,३,५.

†**अभि-पर्ये**(रि-आ√इ), अभिपर्येहि मागृ **१**,२२,७; जैगृ **१**,१२ : ४७.

**अभि-पल्**(परा>ला√इ),अभिपलायत वाधूश्रौ ३, १९ : ८, **४**, १०९ : ३; अभि···पलायन वाधूश्रौ **३**,१९ : ६ : ९.

**अभि√पश्**, अभिपश्यामि निसू २, १ : १७; अभ्यपश्यत् वाधूश्रौ **३**,४३ : २.

**अभि√पा**(पाने) > अभि-पाय गोगृ **४**,१०,१७.

**अभि√पा**(रक्षणे), अभिपातु बौश्रौ **१०**,३१ : ५; ३९ : १४; ४३ :

a) पामे. वैप १ पांर. अभ्युपहतत्, अभ्यपसत औ ६, १२४,१,२ टि. द्र.। b) पामे. पृ २९३ i द्र.। c) पाठः? अ-विपरि° इति शोधः। अ-परि° इति संस्कर्तुरभिमतम्। d) असं. वा. क्रिवि.। e) °वर्ते इति पाठः? यनि. शोधः (तु. सप्र. शौ **७**,१०५,१ पर्यावर्ते इति पामे.)।

माश्रौ १,५,४,११; ६,१,६,१७; वाश्रौ १,४,३,१९;५,४,११; २,१,६,९.

अभि-ष्ठा[a]- -ष्ठाम् माश्रौ १, २, ६, २५†[b].

†अभि-ष्ठित- -तः आश्रौ ६,१३,८; शांश्रौ ८, १०,४; १२, २३, २; आपश्रौ ८,७,२६; १६, २,१०; बौश्रौ ८,१९ : १७; वैश्रौ १६, २४:१२; हिश्रौ ९,५,२२.

अभि√ष्य(<स्य)न्द्[c], अभिसिष्यदे अप्रा ३,१,७.

अभि-सं√यच्छ् (यमने), अभिसंयच्छेत् गोगृ १,१,२०.

अभि-सं√यु (मिश्रणे) > अभिसंयुत्य हिपि २३ : ३१.

अभि-सं√युज् > अभिसं-योग- -गः मीसू १३, ३,१६; -गात् मीसू ४, ३, ३८; ६,१,३; ११, २,६२.

अभि-सं√वर्ण्, अभिसंवर्णयति निसू ४,४ : ८.

अभि-सं√वह् > अभिसम्-उह्य हिश्रौ १३,३,२६.

अभि-सं√विश्, अभिसंविशन्तु आपश्रौ १३,१६,८; १७,१३,२; बौश्रौ.

†अभि-सं√व्ये, अभिसंव्ययिष्ये[d] पागृ २, ६, २०; मागृ १, ९, २७.

अभि-सं√श्रि > अभिसं-श्रित- -तः बृदे १,४४.

अभि-सं√सद्, अभिसंसीदेत् हिश्रौ ११,५,७.

अभि-सं-स√कृ > †अभिसं-स्कृ(त->)ता- -ताम् आपश्रौ १,२,१; वाश्रौ १,२,१,४; हिश्रौ १,२,१२.

अभि-सं√स्तभ् > °सं-स्तभ्य कौसू ५५,१६.

अभि-सं√स्तु, अभिसंस्तौति बृदे ३,४४; ४,१२८.

अभिसं-स्तव- -वः मीसू ४,४,३०.

अभिसं-स्तुत- -तः बृदे २,३४.

अ-भिसं√स्था, ?अभिसंतिष्ठन्ते या ४, २७[e].

अभि-सं√स्वृ, †अभि (समस्वरन्) साअ १, २५६; २,९२३; अअ २०,९९.

अभि-सं√हृ > अभिसं-हार्य काग ३,५.

अभि-सं√क्लृप् > अभिसं-कल्पमान- -नः वाधूश्रौ ४,७५:५;८.

अभि-सं√क्रम्, अभिसंक्रामति निसू ४,११ : १२.

अभि-सं√ख्या > अभिसं-ख्य- > °ख्य-त्व- -त्वात् मीसू ६,७,४१.

अभि-सं√गॄ (शब्दे), अभिसंगृणन्तु कौसू ११५,२[3]†.

अभि-सं√गृह् > अभिसं-गृह्य आश्रौ १,७,५; गोगृ.

अभि-सं√चर्, अभिसंचरेत् आग्निगृ ३,७,३ : २; बौपि २,१,१[f].

अभिसं-चारिणी[g]- -ण्यम् } या १, अभिसं-चारिन्- -रि } ६ɸ.

अभि-सं√ज्ञा > जा, अभिसंजानते बौश्रौ १२,१८ : ११;१८,२४ : २; २६,२ : ७.

अभि-सं-ज्ञा- > अभिसंज्ञित- -तः अप ५८[2],३,९.

†अभि-सत्वन्[h]- -त्वा ऋप्रा ५,२९; शुप्रा ३,८१; तैप्रा ६,१२.

अभि-सं√धा > अभिसं-दधत्- -धत् हिश्रौ २१,२,३२.

अभिसं-धान- -नम् बौश्रौ १९,४ : ३५[2].

अभिसं-धाय अप १३, ३, २; गौध १४,२२.

अभिसं-धि[i]- > अभिसंधि-कृत[j]- -ते वाध २०,२.

अभिसंधि-पूर्व[h]- -र्वम् आपध १, २६,७; बौध १,५,११९; ४,२, १३; हिध १, ७,१८; -र्वे गौध २५,१०.

अभिसंधि-मात्र- -त्रात् गौध २८,१९.

अभिसं-धित्वा बौश्रौ २६,१२ :१४.

अभि-सं√नम्, अभिसंनमेत् आश्रौ ९,७,२५; शांश्रौ १,१७,२०[2].

अभिसंनामयन्ति या ४, २७; ११,२३.

अभिसं-नाम- -मात् या ४,२७.

अभि-सं√नह्, अभिसंनह्यति आपश्रौ २,५,५[2]; कौसू ९०,४; अभिसंनह्येत् बौश्रौ २१, ८:४०; २५, ११ : १०;२३; १४ : १५; १५:१२; हिश्रौ १,७,१६.

अभि-सम (मू √अ)स् (क्षेपणे), अभिसमस्येत् भाश्रौ १,४,८.

अभि-समा√गच्छ्, अभिसमागच्छन्ति या १२,११.

---

*a*) भाप. । गस. । *b*) पाभे. वैप १ विष्ठाम् का १, १०, ५ टि. द्र. । *c*) पा ८, ३,७२ परामृष्टः द्र. । *d*) पाभे. वैप १ परि. उप···मदेम टि. द्र. । *e*) अभिः (=अधिः) कप्र.; वैतु. या. प्रभृ. यनि. इति । *f*) अभि संत्वरयेत् इति R. । *g*) विप. । गस. । वैप १, ३१९ f द्र. । *h*) विप. । बस. । *i*) गस. उप. किः प्र. (पा ३,३,९२) । *j*) विप. (अपराध-) । तृस. ।

**अभि-समा√धा>** अभिसमाधाय हिपि २२ : ३.
**अभि-समा√यच्छ्** (यमने), अभिसमायच्छति वाश्रौ १,२,१,२४.
**अभि-समा(म्-आ)रभ् >** अभिसमा-रम्भ- -म्भात् बौश्रौ २६,९ : ५.
**अभि-समा√वप्** , अभिसमावपन्ति माश्रौ ८,२२,२; अभिसमावपेयुः माश्रौ ८,२२,३.
**अभि-समा √वृत् >** अभिसमा-वर्त्स्यमान- -नः शांगृ १,१,२.
**अभि-समा √सिच् >** अभिसमा-सिच्य कौसू ५३,१६.
**अभि-समा√हृ >** अभिसमाहारम् आपश्रौ २, ४, ४; माश्रौ २,४, ४; वैश्रौ ५,२:१६; हिश्रौ १५, ५,३०.
अभिसमा-हृत्य कौसू ५४,१९.
**अभिसमि**(म्√इ), अभिसमियुः बौश्रौ १३, १२ : ४; २६, ५ : १९; भाशि ११.
**अभि-समी(म्√ई)क्ष्**, अभिसमीक्षेत आपश्रौ १, २, ११; भाश्रौ १,३,४.
अभिसम्-ईक्षमाण- -णः आश्रौ ८, १४, ७; १०; १३; १४; बौश्रौ २,२ : १६.
अभिसम्-ईक्ष्य वैश्रौ १३,१२ : १४; १५; ऋप्रा १७,२४.
**अभिसमुह्य** अभि-सं√वह् द्र.
**अभि-समू**(म्√ऊ)**ह्**(प्रापणे), अभिसमूहति बौश्रौ १४, १४ : ३४; वैश्रौ २०,३८:९; अभिसमूहामि वाश्रौ ३,३,१,२३†.
अभिसम्-ऊह्य आपश्रौ ९, १९, १३; हिपि ९ : ११.
**अभि-समे**(म्-आ√इ), अभिसमायन्ति आश्रौ २,१९,३६; आपश्रौ २२,५,१०†; लाश्रौ ८,६,२६†.
**अभि-सं√पद्** , अभिसंपद्यते शांश्रौ १४,२५,३; वाधूश्रौ; अभिसंपद्येते वाधूश्रौ ४,९८ : ९;१३; अभिसंपद्यन्ते बौश्रौ १६,१३:९; अभिसंपद्येत वाधूश्रौ ३,१२ : १. अभिसंपादयेत् बौश्रौ २, १७ : २४; २०,१७ : ३; २२,६ : ६; २६,२४ : ३.
अभिसं-पन्न- -न्नः ऋप्रा १८, ३; -न्नम् बौश्रौ २०,३ : ३५;३७.
**अभिसं√बन्ध् >** अभिसं-बन्ध- -न्धः माश्रौ ४, १, २; मीसू १, ४,३××; -न्धात् बृदे ६, ९१; मीसू ४,१,३; ५,१,२४;६,३,३.
**अभि-सं√भू**, अभिसंभवन्ति या १४,८; ९[2].
†अभिसंबभूव माश्रौ १, ५, २, १३[a]; अप १[2], १, ६; †अभिसंबभूवुः आपश्रौ १६, २९, १; वैश्रौ १८, २० : ८; हिश्रौ ११, ८,२; अभिसंबभूवथुः वाश्रौ १, ४,२,४†.
**अभि-सं√भृ**, अभिसंभरति बौश्रौ १,२ : १८; अभिसंभराणि बौश्रौ २२,१०:९.
**अभिसं-मनस्**[b]- > °नस्-काम[c]- -मः अप्र ६,१०२.
**अभि-सं √मील् >** अभिसंमील्य वाश्रौ १,३,२, २५.
**अभि-संमुख**[d]- -खाः आपश्रौ १२,२, १६; -खानि हिश्रौ ७,७,१९[e].
**अभि-सव्य**[f]- -व्यम् वाधूश्रौ ३,९०: ३; ६; १०.
**अभि√सिध्**, अभिसेधेत् बौश्रौ २०, २७ : ६.
**अभि√सृ >** अभि-सारि(न्>)णी[g]- -णी ऋअ १, ९,४; २,१०,२३; शुअ ५,६३; अअ २०,७३; ऋप्रा १६,६६;-ण्यौ ऋअ २,१०,५०.
**अभि√सृज्**, अभिसृजामि या १०, ३७[h].
अभि-सृष्ट- > °ष्ट-का(ल>)ला[i]- > °ल-त(म>)मा- -मा या १२,७;८.
**अभि√सृप्**, अभिसर्पति आपश्रौ १०, ९, २; बौश्रौ ६, ५ : ४; ११, २ : १६; १८, १६ : १३; अभिसर्पतः ११,२:१५;अभिसर्पन्ति या ७,१९†; अभि···सर्पन्ति बौश्रौ ७, ८ : ४; १५,१७:२६; †अभिसर्प बौश्रौ ११,८:१;१२, १३:१; माश्रौ २, ४,२, ३८;५, ३,७;हिश्रौ ८,४,४८; अभिसर्पेत् बौश्रौ २५,७ : ५.
अभि-सर्पण- -णे बौश्रौ २१,९ : ८.
अभि-सृप्य बौश्रौ १, १३ : २०××.
**?अभिसोमाः** निसू ६,३ : १५.
**अभि√स्कन्द् >** अभि-स्कन्दम् अप्रा ३,१,७†; शौच २,१०४.
**अभि√स्तृ,स्तॄ**, अभिस्तृणाति भाश्रौ ३, १२, २; हिश्रौ २, ६, ३०; †अभिस्तृणीहि[j] आपश्रौ ३,१३,

*a*) पाभे. वैप २,३खं. संबभूवतुः तैब्रा १,२,१,२ टि. द्र. । *b*) प्रास. । *c*) विप. । बस. । *d*) विप. । 'अभिसंगतं मुखं यस्य' इति बस. । *e*) सपा. अभिसंमुखानि<>अभ्यग्राणि इति पाभे. । *f*) अस. वा. क्रिवि. । *g*) नाप. (त्रिष्टुप्छन्दोविशेष-) । *h*) वैप १, ३१७ j द्र. । *i*) विप. (सूर्या-, वृषाकपायी-) । बस. । *j*) पाभे. वैप १ परिस्तृणीहि शौ ७,९९,१ टि. द्र. ।

५; भाश्रौ ३,१२,३; हिश्रौ २, ६,३०; अभिस्तृणीयात् आपश्रौ ११,१५,५.

अभि-स्तीर्य आपश्रौ ३,१३,५.

अभि√स्फूर्ज्, अभिस्फूर्जति शौच २,१०२†.

अभि√स्यन्द्[a], अभिस्यन्देरन् आगृ ४,५,७.

†अभि√स्रु, अभिस्रवन्तु आपश्रौ ५,४,१; बौश्रौ; माश्रौ ६,१, ५,२२[b]××.

†अभि√स्वृ, अभिस्वरन्ति या ३, १२ф; शौच २,१०२; अभि-स्वर शांश्रौ १८,१८,२; या ६, २१.

अभि-स्वर्[c]- -स्वरा ऋप्रा ५,२४†.

अभि√हन्, अभिहन्ति माश्रौ १, २, ४, २६; ७, ३, १६; या ७, २३; आशि ८, १; ७; अभिघ्नते आपश्रौ ८, ११, १२; भाश्रौ ८, १२, २३; अभिघ्नन्ति आपश्रौ १८, ५, १८; अभिजहि जैगृ १, २० : १६; अभिहन्यात् अप ५६, १, २-१०; वाध ६, ३६; शंध ८७; ९९.

अभि (जघन्थ) शुप्रा ३,९९.

अभिजिघांसति या ५, २; अभि (जिघांसति) आश्रौ २,१८,३†.

अभि-घात- -तः बौगृ ४, २, ६; -तान् बृदे ७, ८८; -ताय अप ५९,१,२०.

अभि-घातम् आग्निगृ ३, ८,१ : १९; अभिघातम्ऽअभिघातम् बौपि १,१४ : १७.

अभि-घ्नत्- -घ्नन् आपध २, २२, १३; हिध २,५,१४३.

अभि-हत- -तः निसू ७, ११ : १२; अप ३५,२,९; पाशि ९; -तम् हिश्रौ १, ६, ३; -तस्य बृदे ७, ८४; -ताः चव्यू ३ : २; -ते अप ५६,१,२; ३; ७.

अभि-हत्य गौध १२,१.

अभि-हन्यमान- -ने आशि ८,७.

अभि-हरत्- अभि√हृ द्र.

अभि-हव- अभि√ह्वे द्र.

अभि√हा (गतौ), अभिजिहीते या ५,२१.

अभि√हा (त्यागे), अभिजिहीत हिध २,५,७७[d].

अभि-हार्या- अभि√हृ द्र.

अभि-हिं√कृ, अभिहिङ्करोति आपश्रौ २०, १३, ७; बौश्रौ ७,६ : ५६; हिश्रौ १४, ३, १२; अभिहिङ्कुर्वन्ति बौश्रौ १६, ३ : ३१; अभिहिङ्करोत् या ११,४२.

अभिहिं-कार- -रः आश्रौ १,२, ४; २६; -रात् आश्रौ १, २, २४; ४,४,२; बौश्रौ ३,२७ : १८.

अभिहिंकारा(र-अ)भ्यास[e]- -सौ आश्रौ १,२,२४.

अभिहिं-कृत्य आश्रौ २, १६,१××; आपश्रौ.

†?अभिहिपः आश्रौ १,४,८.

अभि√हु(दानादनयोः), अभिजुहोति शांश्रौ २, ८, २३; काश्रौ; अभिजुहुतः बौश्रौ ५,८ : ३४; अभिजुह्वति बौश्रौ १७,४५ : ९; ११; २५, २४ : २५; †अभिजुहोमि आपश्रौ ११, १२, ५; बौश्रौ ६, २८ : ३६; हिश्रौ ७, ६, २७; अभिजुहुयात् आश्रौ १,१२,३७; २, ३, १६; काश्रौ; अभिजुहुयुः द्राश्रौ १२, २, २१; लाश्रौ ४, १०,२२.

अभि-जुह्वत्- -ह्वत्[f] भाश्रौ ७,१५,९.

अभि-हुत,ता- -तः काश्रौ ९, १३, २९; या ७,२४; -तम् आपश्रौ १७,२०,७; या ७, २५; -ताः वैश्रौ १५, ६ : ७; -तानाम् आपश्रौ १२, ५, १०; -तायाम् द्राश्रौ २,३,७; लाश्रौ १, ७, ७; -ते द्राश्रौ १४, १, ११; लाश्रौ ५,५,८; -तौ हिश्रौ ३,६,५.

अभिहुता(त-अ)लंकृत[g]- -तम् कौगृ ४८, ३.

अभि-हुत्य बौश्रौ ५, २ : २२××; वाश्रौ.

अभि-हुत्वा वैश्रौ १०, १६ : १६; वैताश्रौ ६, ८.

?अभि-हूय[h] बौश्रौ १९, ५ : २.

अभि-हूयमान- -ने आश्रौ ४, १०, ३.

अभि-होतवै आपश्रौ ६,१०,१२.

अभि-होम[i]- -मः आपश्रौ १४, ७, ५; वैश्रौ १७, १० : १०; हिश्रौ ९, ८, ३७; १३,१, २४; -मम् वैताश्रौ १५, १३; -मात् बौश्रौ २०,६ : ३०; द्राश्रौ १४,१,१०; लाश्रौ ५, ५,७; -मे बौश्रौ २०, २५ : २१; २१,१ : ३२; १४ : २२; १५ : १; २२, ६ : १९; १८ : ११; २३,४ : १३.

अभिहोम-स्रव[j]- -वेण जैश्रौका ७६.

अभि-हूति- अभि√ह्वे द्र.

---

*a*) तु. पा ८, ३,७२ । *b*) वैतु. BC. अभिश्र° इति? । *c*) वैप १, परि. च द्र. । *d*) पाभे. पृ २६३ d द्र. । *e*) द्वस. । *f*) °ह्वन् इति पाठः? यनि. शोधः । *g*) विप. (अश्वत्थ-मणि-) । कस. । *h*) पाठः? (तु. संस्कर्तुः टि.) । *i*) भाप. (अभि-हव-) । गस. । *j*) =होम-शेष- । षस. ।

अभि √हृ, अभिहरते भागृ १, १० : १२; अभिहरन्ति बौश्रौ १५, १९ : ११; वाधूश्रौ ३, ८१ : २?[a]; आग्निगृ ३, ११, १ : ७; कौसू ८०, १६; अभि···हरन्ति बौश्रौ १६,२९ : १०; †अभिहरे जैगृ १, १८ : ८; १०; १२; †अभिहराणि आपश्रौ ४, २, १; माश्रौ ४,२,५; हिश्रौ १, २, ५; अभिहरेत् द्राश्रौ १०,२,६; लाश्रौ ३,१०,६.

अभि-हरत्– -रन्तम् द्राश्रौ १०, २, ७; लाश्रौ ३,१०,६.

अभि-हा(र्य>)र्या– -र्याभिः बौश्रौ १५,१ : ८.

अभि-हृत– -तम् आपध १, ८, ७; हिध १,२,९५.

अभिहृत-तर– -राणि आपश्रौ २, ९, १४; –रेण आश्रौ १, १, २३.

अभि-हृत्य आपश्रौ २,१३,४; वाश्रौ १,५,२,२६; हिश्रौ २, १, १२.

अभि-ह्रियमाण,णा– -णः अप्राय ३, १†[b]; –णासु अप्राय ३,२.

अभि √हृ (<घृ), †अभिजिहर्ति आपश्रौ ४,७,२[c]; माश्रौ ४,११, १[c]; हिश्रौ ६,२,१७[c]; आग्निगृ ३,४,४:८; बौपि ३,४,१४;१५.

अभि √ह्वे, अभिहवामहे वाधूश्रौ ४, ३६ : ४[d].

अभिह्वयामि या ५,७.

अभि-हव– पा ३, ३, ७२; –वात् माश्रौ १,५,१,१५.

अभि-हूति– -तौ या ५,२८.

अभी(भि √इ), अभ्यायत वाधूश्रौ ४, ३० : ६.

अभ्येति शांश्रौ २,११,६;१२,३; आपश्रौ; हिश्रौ ६,७,८[2]†[e]××; या ४, ५; †अभि···एति अअ १३, २; या ११, ४६ϕ; अप्रा १, १, १५; (अभि)एति या ३, २०†[f]; अभियन्ति वाश्रौ २,१, १,७; लाश्रौ ९,२,२†; अभ्येमि माश्रौ २,४,५,६†; †अभियन्तु आपमं २, २१, १५; भागृ २, २६ : ४; हिगृ १, १२, ६; अभि···एत् वाधूश्रौ ४, ३२ : ३××; अभीयात् अप्राय ६,७.

अभीत्व(भि-इत्वर >)री[g]– -री आपश्रौ १०,१९,३;२०,७, १६; २२,२१,७;माश्रौ १०,१२,११; –†रीः आपश्रौ १,१२, १; ६, ५, ६; ६,१०; बौश्रौ १०,१४ : २; माश्रौ १, ६, १, १५; २२; वाश्रौ १,५, २,१७; २१; –रीम् आश्रौ ५, ७, ३; शांश्रौ ७, ६, ३; हिश्रौ १७, ७, २९; –†र्या आश्रौ ५, ७, ३; शांश्रौ ७, ६, ३![h]; –†र्यै आपश्रौ १, २४,६; बौश्रौ १,१४ : ६; माश्रौ १,२५, १०; २,१०, ३; माश्रौ १,२,३, १९; ६,१७; हिश्रौ १, ६, ३७; ८,२०.

अभी(भि √ई), †अभी(ईमहे) आश्रौ २,१६,२××; शांश्रौ.

१अभीक– अभिक- द्र.

†२अभीक[g]– -के आश्रौ ६, १२, २; अप ४८,११७; निघ २,१७;३, २९; या ३,२०ϕ.

आभीक[i]– -कम् शांश्रौ १३,५,१४; काश्रौ २५,१४,१४; क्षुसू १,११: १७; २,३:१६; निसू ७,७:२०.

अभीक्ष्ण[j]– पाग १, १, ३७; ५, १, १२४; –क्ष्णम् शांश्रौ १,१७,७; लाश्रौ १०, १०, १४; अप ६४, ७,४![k]; या २,२५;–क्ष्णाः[l] अप ६४, ३,१०.

आभीक्ष्ण्य– पाग ५, १, १२४; –क्ष्ण्ये पा ३, २,८१;४, २२; पावा २,१,७२;८,१,१२.

अभीक्ष्ण-परिवेष[m]– -षाः अप ६४, ४,५.

अभीक्ष्ण-शस् (:) माशि १२, ७.

अभीचारानुव्याहार– अभि √चर् द्र.

अभी(भि-इ)ज्या– अभि √यज् द्र.

अभी (भि √इ) ध ,न्धृ ,अभीन्धे शौच ३,६५; अभीन्धते बौश्रौ १, ८ : २०; ५,१ : २३; द्राश्रौ २, २, २७; लाश्रौ १, ६,२५; अभीन्धताम् माशि ७,४†.

अभी(भि-इ)द्ध,द्धा[g]– -द्धः या ११, ४३†; –द्धात् भागृ ३, ९ : २;

---

*a*) अविहरन्ति इति पाठः? यनि. शोधः। *b*) पामे. वैप १ परि. उपावह्रियमाणः तै ४,४,९,१ टि. द्र.। *c*) सप्र. अभिजिहर्ति <> विदधाति इति पामे.। *d*) ···भिहवामहे इति त्रुटितः पाठः? यनि. शोधः। *e*) पामे. वैप १ परि. अध्येति मा ३,४२ टि. द्र.। *f*) पामे. वैप १ परि. अभि···एति ऋ ७,१०४,२१ टि. द्र.। *g*) वैप १, परि. च द्र.। *h*) °र्याः इति पाठः? यनि. शोधः (तु. आश्रौ., शांब्रा २८, ६ च)। *i*) नाप. (साम-विशेष-)। मत्वर्थीयः अण् प्र. उसं. (पा ५,२,६१)। *j*) विप. व्यु.?। < अभि-क्षण- (क्षणम् अभिव्याप्त- इति प्रास.) इति या.। –क्ष्णम् इति पौनःपुन्य-पर्याय इति अस. वा. क्रिवि.। *k*) आ° इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि.)। *l*) विप. (मारुत-)। *m*) कस.।

–द्धाम् माश्रौ ६,१,२,१८.

अभी(भि-इ)न्धिष्यत्– -ष्यत्सु द्राश्रौ १४,२,१२; लाश्रौ ५,७,१०.

अभी-नाम– अभि√नम् द्र.

अभीपाद[a]– -दः साश्र १,२३१.

अभीप्सन्ती–, अभीप्सित– अभ्या-(भि√आ)प् द्र.

ϕअभीयक्षत्– अभि√यज् द्र.

†?अभीरुण[b]– -णम् आपश्रौ ७,२१, ६; बौश्रौ ४,७ : २४; भाश्रौ ७, १६,१३; हिश्रौ ४,४,४४; जैश्रौ १२ : ७; द्राश्रौ ४,२,२; लाश्रौ २,२,११; अप्रा ३,४,१.

१,२अभीवर्त– अभि√वृत् द्र.

अभीवार (भि-इव√*अर्), ?अभी-वार[b] अप्रा २,३,१९†.

अभी-वृत– अभि√वृ (आच्छादने) द्र.

अभी(भि√ई)शु > १†अभी(भि-ई) शु[c]– -शवः अप ४८, ८२; ११३; बृदे १, ११०; निघ १, ५; २,५; ५,३; या ३,९ϕ; ९, १५; –शुना अप्रा ३,४,१; बौश्रौ २०,१२ : १६[d]; अप ४८,८१[e]; निघ २,४[e]; –शून् द्राश्रौ ५,४, १२; लाश्रौ २,८, १२; उसू ५, ५†; –शूनाम् या ९,१६†.

२अभीशु[f]– -शुः साश्र १,२१०.

आभीशव[g]– -वम् शांश्रौ १३, ५, १४; द्राश्रौ ९,३,१०; लाश्रौ ३, ६,३०; निसू ३,१० : २;५,२ : २७;९,१२ : १७; –वयोः लाश्रौ ६,१०,६; –वानि काश्रौ २५, १४,१४; –वे लाश्रौ ७,४,१.

आभीशव-प्रभृति– -तीनाम् लाश्रौ ७,४,११.

अभी(भि√इ)षृ (इच्छायाम्)

२अभी(भि-इ)ष्ट,ष्टा– -ष्टम् कप्र ३, २,१५; शंध ४४१; –ष्टाः द्राश्रौ ११, ३, १७; –ष्टाम् अप ३०[2], २,७; ३६, ३,१; विध ७८, ५; वैध ३,१०,८.

अभी-षङ्ग– अभि√षञ्ज् द्र.

अभीषाह्–,°षाहिन्– अभि√षह् द्र.

१अभीष्ट,ष्टा– अभि√यज् द्र.

२अभीष्ट, ष्टा– अभी(भि√इ)षृ द्र.

†?अभीष्णात्[h] आपश्रौ १९,२,१९.

अ-भुक्त्वा गोगृ ४,५,२३; ९,१; कौसू १३९,२२; गौध १८,३२; शंध ४४४.

?अ-भुजिष्य[i]– -ष्यः शांश्रौ १२, २०, ४†.

अ-भुज्य– -ज्यम् निसू २,१३ : ११.

अ-भुञ्जत्– -ञ्जति कौगृ ३, ९,४४[j].

अ-भुञ्जान– -नः विध ५, ९६; गौध २३,२१; –ने शांगृ ४,७, ५०[j]; –नौ अप्राय ४,४.

अ-भूगत– -तम् अप ३८,१,४.

अ-भूत– -तम् या १,६[2]; –ताः बौश्रौ १८, २५ : १७; –तानाम् अप ६४,४,७.

अभूत-तद्-भाव– -वे पावा ५, ४, ५०.

अभूततद्भाव ग्रहण– -णम् पावा ३,१,१२; ५,४,५०.

अ-भूत-पूर्व– -र्वे पावा १,१,५६.

†अ-भूति[k]– -तिः अप्र १२, ५; –त्यै काश्रौ २५, ११, २१; बौश्रौ २८,९ : २०.

अ-भूमि[k]– -मौ काश्रौ ६,८,३.

अ-भूमिगत– -तान् वागृ ४,१३.

अ-भूमि-स्पृष्ट– -ष्टे जैगृ १,११:१९.

अ-भृष्ट– -ष्टम् कौसू २२,२.

अ-भेद[k]– -देन काश्रौ १३,४,२२.

?अभोक्ता[m] वैगृ ५,२ : ३.

अ-भोक्ष्यत्– -क्ष्यन् आश्रौ ३,११,३; वैगृ ६,१७ : ९.

अ-भोजन[k]– -नम् काश्रौ १४, ५, २२; १७, ३,७; २५,४,५; गोगृ ३,२,९; कप्र ३,८,९; वाध २३, २७; शंध ३९६; ४२५; ४२९; ४६१; आपध १,२६,४;२,१५, ५; १७, २४; बौध ४, ५,१५; विध ५४, २९; हिध १,७,१५; २, ३, ३५; ५, ५२; गौध २३, २४; –नेन लाश्रौ ८, ८, ४०; गोगृ १,९,१९; द्रागृ २,२,९.

अ-भोजनीय, या– -यम् आपश्रौ ९, १५, १७; भाश्रौ ९, १८, ४; हिश्रौ १५, ४, ३७; –यस्य आपश्रौ ९, ३, १३; भाश्रौ ९, ५,२; हिश्रौ १५,१,६१; –†याः आपश्रौ ९, ३, १२; भाश्रौ ९, ५,२; हिश्रौ १५,१,६०.

अ-भोज्य– -ज्यम् वैश्रौ ११, ११ : १२; आग्निगृ २, ६,२ : १९†; वाध १४, २; २०; शंध १५४, ४२४; आपध १, ४,१२; १६, १६; २१;२२; १७,२८†; १८,

*a*) व्यप. (उद्दलाऽपत्य-)। व्यु. ?। *b*) वैप १ द्र.। *c*) वैप १, परि. च द्र.। *d*) अभीषू इति पाठः? यनि. शोधः (तु. संस्कर्तुः टि.)। *e*) नाप. (बाहु-)। *f*) व्यप. (आङ्गिरस-)। व्यु. ?। *g*) नाप. (साम-विशेष-)। *h*) वैप २,३खं. द्र.। *i*) तु. वैप १,३७१ f,g,h; परि. च। *j*) सपा.°ञ्जति<>°ञ्जाने इति पाभे.। *k*) तस.। *l*) पाभे. वैप १ परि. अभूत्याः शौ ७,१०५,१ टि. द्र.। *m*) पाठः? अभेत्ता इति C. शोधः? (तु. मूको.)।

१०; १६;२७, ३; बौध २,५, ११†; हिध १,१,१३१;५,१५; २०;२१;६०†;७९; ८५; ११६; ७, २८; गौध १७, ८; २४, ३; सुध ६१; सुधप ८८ : ४; मीसू ६, ५, ४८; -ज्यस्य माश्रौ ५, १,५,३७; मागृ १,३,४; -ज्याः विध ५७, ५; -ज्यात् बौध १, ५,५५; -ज्यानाम् बौध ४, २, ५; -ज्यानि सुध ५९.

अभोज्य-भोजन[a]- -ने बौध ४,६,७; गौध २३,२३.

अभोज्य-भोज्य-संज्ञक[b]- -के वाध २७,१०.

१अभोज्या( ज्य-अ )न्न[c]- > °न्ना-( न्न-अ )भक्ष्य-भक्षण[d]- -णम् विध ३७,७.

अभोज्यान्ना(न्न-अ)भक्ष्या (क्ष्य-आ) शिन्- -शी विध ४४,११.

२अभोज्या(ज्य-अ)न्न[e]- -न्नः वैध ३, १३,११; १४, ५; -न्नस्य बौध ४,२,५.

अभोज्या( ज्य-अ )भक्ष्य-शूद्रान्न-भक्षण[d]- -णे अप ३८,३,४.

अ-भौजिष्य[f]- -ष्यात् मु १२,२.

अभ्य( भि-अ )ग्र,ग्रा[c]- -ग्रः आपश्रौ १३,१५,१२; -ग्रम्[g] शांश्रौ ८, ७,२०; १४, ४०, १७; आपश्रौ २,९,६; भाश्रौ २, ९,४; माश्रौ २, ५,२,२३; वैश्रौ ५,६ : १२; हिश्रौ १,८,७; -ग्राः बौश्रौ ३, २८ : २०†; हिश्रौ ७, ७, १३; -ग्राणि[h] आपश्रौ ११, १०,१०; वैश्रौ १४, ११ : ८; -ग्रायाम् आपध १,११,२५; हिध १, ३, ७५; -ग्रे वाश्रौ १, ३, २,१३; वैश्रौ १६,१९ : २.

†अभ्य( भि√अ )घाय( < अघ- ), अभ्यघायन्ति अप्रा ३, १,७[2]; शौच ४,९६.

?अभ्यङ्क्ता[i] अप ६४,३,३.

अभ्य( भि√अ )ञ्ज्, ञ्ज्, अभ्यञ्जेत् गोगृ २,४,३.

अभ्यङ्क्ते काश्रौ ७, २, ३०; आपश्रौ; अभ्यनक्ति बौश्रौ ६, २ : १४××; माश्रौ; हिश्रौ ११, ७,४१[j]; अभ्यञ्जते आपश्रौ ८, ११,१३; बौश्रौ; अभि...अञ्जते आपश्रौ २३,७,८; हिश्रौ १८, ३,३; अभ्यञ्जन्ति काश्रौ २०, ५, १५; आपश्रौ २०, १५, १२; वाश्रौ ३, ४, ३, ४४; मागृ १, १२, ३; †अभ्यञ्जताम् आपश्रौ १,९,१७; बौश्रौ ३,११ : ३; †अभ्यङ्क्ष्व आश्रौ २,७,५; आपश्रौ; अभ्यञ्जीत बौश्रौ २१, ८ : ९××; हिश्रौ; अभ्यञ्ज्यात् वाध ५, ७; अभ्यञ्जीरन् आश्रौ ११, ६,३; लाश्रौ १०,४,११.

अभ्यञ्जयेत् अप १८,३,३.

अभ्य(भि-अ)क्त,क्ता- -क्तः आपश्रौ १५,२१,८; भाश्रौ; -क्तम् शांश्रौ ४,१५,५;१६,३;वाश्रौ;-क्ताकौसू ३९,१८; या ६, १५ϕ[k]; -क्ताः आपश्रौ १९, ११,३××; बौश्रौ; -क्ताम् विध ६९, १३; -क्ते या ३,२०; -क्तेन मागृ १,२२,२.

अभ्यक्त-शिरस्[e]- -रसम् वागृ ५,६.

अभ्य(भि-अ)ङ्ग[l]- -ङ्गः अप ६८, ५, ११.

अभ्यङ्ग-पूर्वक- -कम् शंध १००.

अभ्य(भि-अ)ज्य शांश्रौ ४,१५,२२; आपश्रौ २, ११, ४; १६, २५, १[j]; काठश्रौ.

अभ्य(भि-अ)ज्यमान- -नः वैताश्रौ ११,९; -नम् वैताश्रौ १०, ४; २९, १;-नान् वैश्रौ ७,५ : १०.

अभ्य( भि-अ )ञ्जत्- -ञ्जन् भागृ १,१० : ६.

†अभ्य(भि-अ)ञ्जन[m]- -नः बौश्रौ १८, ४८:२१[n]; -नम् आपश्रौ १,८,२××; बौश्रौ; -नस्य माश्रौ १, १, २, २९; -नात् या ३,८; -ने बौश्रौ २१, ८ : ७; कौगृ ३, ९, ४०; शांगृ ४, ७, ४६; -नेन वाश्रौ १,२,३,२६.

अभ्यञ्जन-प्रभृति- -ति काश्रौ ८,८,१७; २०,४,८.

अभ्यञ्जन-हताक्षिक-पल्पूलित[l]- -तानि शांश्रौ ३,८,१२.

अभ्यञ्जना( न-आ )क्रुष्ट-वान्त-श्रम-दुःस्वप्नदर्शन[o]- -नेषु शंध ४७.

अभ्यञ्जना( न-आ )ञ्जन[o]- -ने आश्रौ २,७,५.

अभ्यञ्जना( न-आ )दि- -दि काश्रौ ७, ३,११.

अभ्य( भि√अ )त् > अभ्य( भि-अ )तित- -तः या ४,५.

अभ्य(भि-अ) ति√क्रम्, अभ्यतिक्रामति वाधूश्रौ ४,१६ : १६.

---

*a*) षस. । *b*) विप. । द्वस. > बस. । *c*) कस. । *d*) द्वस. > षस. । *e*) विप. । बस. । *f*) तस. उप. भाप. < भुजिष्य- । *g*) वा. क्रिवि. । *h*) पाभे. पृ ३१७ *o* द्र. । *i*) पाठः? अ-व्यङ्क्ता इति संस्कर्तुः शोध-प्रस्तावः । *j*) सप्र. अभ्यनक्ति <> अभ्यज्य इति पाभे. । *k*) = अभ्यक् ⌊तु. वैप १ √*म्यक्ष्⌋। *l*) भाप. । *m*) वैप १, परि. च द्र. । *n*) नाप. (एकाह-विशेष-) । *o*) द्वस. ।

अभ्यति-क्रान्त- -न्तानि बौश्रौ २४, ३१ : १०.

**अभ्य(भि-अ)ति-नि√नी,** अभ्यतिनिनयति कौसू ४९,२३.

**अभ्य(भि-अ)ति√नी,** अभ्यतिनयति कौसू ४१,२१.

**अभ्य(भि-अ)ति√रिच्,** अभ्यतिरिच्यते काश्रौ २५, १३, १६; बौश्रौ १४,२५ : १२;२०; अभ्यतिरिच्येत भाश्रौ १०, १३, ४; अभ्यतिरिच्येरन् बौश्रौ २६, ९ : १५.

**अभ्यती(भि-अति √इ),** अभ्यतीयात् वाधूश्रौ ४,१२ : १.

अभ्यती(ति-इ)त[a]- -तेषु विध ५७, १५.

**अभ्य(भि-अ)त्यू(ति √ऊ)ह्,** अभ्यत्यूहति माश्रौ ५,१,९,२२[b].

**अभ्य(भि-अ)धिक,का**[c]- -कम् विध ५,१३;८१; -काः कागृउ ४४ : ९; -कैः अप ६३,३,१.

**अभ्य(भि-अ)धि√मन्,** अभ्यधिमन्यते आपध १,१९,१३; हिध १,५,११५.

**अभ्य(भि-अ)धि√मृश् >**अभ्यधिमृश्य आपध १,५,२१[d].

**अभ्य(भि-अ)ध्व**[e]- -ध्वम् काश्रौ २४, ५,३५.

**अभ्य(भि√अ)न्** (प्राणने), अभ्यनिति जैश्रौ १७ : १४.

अभ्य(भि-अ)न्य शांश्रौ १७, १५, १३;१६,६; ८;१७,२.

**अभ्य(भि-अ)नु√ज्ञा >**अभ्यनु-ज्ञा- -ज्ञा ऋप्रा १५,११; -ज्ञायाम् आगृ ४,७,२१.

अभ्यनु-ज्ञात- -तः आग्निगृ ३,१२, १ : २१; बौगृ २, ११, २५; ४५; बौपि २, ९, १७; ११, ६; -तस्य बौगृ ४,१२,१.

अभ्यनु-ज्ञेय- -यम् बौगृ २, ११, ४४.

**अभ्य(भि-अ)न्त**[c]- -न्तम् वैश्रौ १७, १५ : २.

**अभ्य(भि-अ)न्तर,रा**[c]- -रम्[f] आपश्रौ २, ५,४; ७,३,१४××; भाश्रौ; -राः वाश्रौ १,१,९,१४; -राणि द्राश्रौ ३, २, २; लाश्रौ १, १०, १; बौध १, ७, ८; -रायाम् बौश्रौ १९,३ : ६;१२; १७;२३; २६; २९; ३२; ३५; ९ : ४; ५; -रे माश्रौ ५, २,१५, ६[f]; आग्निगृ २, ४, १ : १०; मागृ १,९,३०; -रेण अप ७१,५,२.

आभ्यन्तर- -रः आशि ३,२;३.

अभ्यन्तर-तस् (:) वाश्रौ ३,२, ५, ३८; पागृ १, ११, १; ३,४,५; अप ६५,१,६.

अभ्यन्तर-विशे(प>) षा[g]- -षे आपशु २०, ६; हिशु ६, ४६.

**अभ्यपा(भि-अप √अ)न्** (प्राणने), अभ्यपान्यात् आश्रौ ५,२,२.

अभ्यपा(प-अ)न्य आपश्रौ ६, २६, ५[3]; हिश्रौ ६, ७, ७[3]; कौगृ १, १६,२[h].

**अभ्य(भि √अ)म्** (गत्यादिषु), अभ्यमीति बौश्रौ १५, ६ : १.

१अभ्य(भि-अ)मन >°न-वत्- -वान् या ६,१२.

अभ्य(भि-अ)मिन्- पा ३,२,१५७.

**अभ्य(भि√अ)म्**(रोगे)>२अभ्य(भि-अ)मन[i]- -नेन या ६, १२.

अभ्यमन-हन्- -हा या १०,१७.

?**अभ्यमंस्थात्**[j] बौश्रौ २४,१२ : ७.

**अभ्य(भि-अ)मित**[k]- -तः या ६,१६; २३.

**अभ्य(भि-अ)मित्र**[l]- -त्रात्, °त्रीण-, °त्रीय-, °त्र्य- पा ५, २,१७.

**अभ्य(भि-अ)य-** अभी(भि √इ) द्र.

**अभ्य(भि √अ)र्च्,** अभ्यर्चयति आग्निगृ २,५, १ : ३९; बौगृ ३,११,२; वैगृ ४,४ : ६,५,२ : २४; अभ्यर्चयेत् वाध ९,७; विध ६५,१.

अभ्य(भि-अ)र्चत्- -र्चन्तः वाश्रौ ३, २, ५,३४; ३५.

अभ्य(भि-अ)र्चन- -नानि बौगृ ३, ७, २९.

अभ्य(भि-अ)र्च्य आग्निगृ १, ७, १ : ९××; बौगृ.

**अभ्यर्ण**[m] पा ७,२,२५.

**अभ्य(भि√अ)र्धॆ >** १अभ्यर्ध- > †°र्ध-यज्वन्[n]- -ज्वा निघ ४,३; या ६,६ϕ.

अभ्य(भि अ)र्धयत्- -यन् या ६,६.

**२अभ्य(भि-अ)र्ध**[o]- -र्धात् बौश्रौ ११, ५ : १७; १४, १४ : २३; २०,

---

*a*) विप. (गुरु-)। *b*) सप्र. आपश्रौ १९, २२,१४ हिश्रौ २२, ४,१७ गमयेत् इति पाभे.। *c*) विप.। प्रास.। *d*) पाभे. पृ ३०५ l द्र.। *e*) अस. वा. किवि.। *f*) वा. किवि.। *g*) विप.। बस.। *h*) सप्र. शांगृ १, २४,२ अभ्यवान्य इति पाभे.। *i*) =अमीव,वा-। *j*) पाठः? अभ्य(भि-अ)म- [वि.] > -मम् [वा. किवि.], स्थात् (=अस्थात्) इति द्वि-पदः शोधः। *k*) =अनभिहिंसित-। प्रास. उप. अ+मित- < √मि [हिंसायाम्] इति। *l*) अस.। *m*) =आसन्न-। <अभ्य(भि√*अ)र्द् इति (तु. वैप १,३९७ p, ४ थः)। पाप्र.<अभ्य(भि√अ)र्द् इति। *n*) वैप १, परि. च द्र.। *o*) प्रास. वा. किवि.।

२ : ३०; ३३; २२, ११ : १३; –र्धान्[a] बौश्रौ १८, ४० : २०.
**अभ्य(भि √ अ) र्ह् > अभ्य (भि-अ) र्हित–** -तम् पावा २,२,३४.
**अभ्य(भि-अ)वकाश[b]–** -शे कौसू ४६,५५[२].
**अभ्य (भि-अ) व √ क्रम्**, अभ्यवक्रामेयुः बौश्रौ २१,१५ : २६.
अभ्यव-क्रामत्– -मन्तम् वैश्रौ १८, १६ : ३३.
**अभ्य(भि-अ)व √ गाह्**, अभ्यवगाहन्ति[c] हिश्रौ १४, १, ३०; ३, ४०.
अभ्यवगाहयन्ति आपश्रौ २०, ३,१०[c].
अभ्यव-गाहिन्[d]– -हिनः वैध १, ८,१.
**अभ्य( भि-अ )व √ दुह् >** अभ्यव-दुग्ध– -ग्धान् कौसू ३२,२.
**अभ्य(भि-अ)व √ निज्**, अभ्यवनेनेक्ति कौसू ४८,४३.
अभ्यवनेजयति कौसू ७१, १६; ८६,१९.
**अभ्य(भि-अ)व √ नी**, अभ्यवनयेत् आपश्रौ १४,२७,१.
अभ्यवनिनाय शांश्रौ १५,२३,१.
अभ्यव-नयत्– -यन् बौश्रौ २, ८ : १०.
अभ्यव-नीय आपश्रौ ३,२०,१;२०, २२,६; हिश्रौ १४,५,४.
**अभ्य(भि-अ)व-पूर्व–** -र्वस्य पा ६, १,२६.
**अभ्य(भि-अ)व √ मन्**, अभ्यवमन्यते वाध १४,१८; विध ५७, १२.

**अभ्य(भि-अ)व √ मृज्**, अभ्यवमार्ष्टि वैश्रौ २,५ : ६.
**अभ्य(भि-अ)व √ रुह्**, अभ्यवरोहति वाश्रौ ३,३,३,११.
**अभ्य(भि-अ)व √ वृत्**, अभ्यववर्तेरन् आपश्रौ ५,१४, १४; बौश्रौ २, १७ : २२; २०,१७ : ८; माश्रौ ५,८,१३.
अभ्यववर्तयन्ति बौश्रौ ११, ६ : १७; १२,७ : ३२.
**अभ्य (भि-अ) व √ सृज्**, अभ्यवसृजामि अप १०,१,१३†.
**अभ्य(भि-अ)व √ सृप्**, अभ्यवसर्पन्ति माश्रौ २,२,२,६.
**अभ्य(भि-अ)व √ स्ना >** अभ्यव-स्नाय आपश्रौ १८,२२,३[e].
**अभ्य ( भि-अ ) व √ हृ**, अभ्यवहरति †आपश्रौ ९,१५,१६ ××; वैश्रौ; अभ्यवहरन्ति आपश्रौ ९, ११, १५; १६,८, १; बौश्रौ; अभ्यवहरत बौश्रौ १६, ४ : ११†; अभ्यवहरेत् शांश्रौ ४, ५, ७; आपश्रौ; अभ्यवहरेयुः आश्रौ ३, १०,२२; १४, १०; बौश्रौ.
अभ्यवहारयेत् लाश्रौ ८,८,३.
अभ्यव-हरण– -णम् शांश्रौ ४, २१, १८.
अभ्यवहरण(ण-आ)दि– -दि काश्रौ १७, १, १; आपश्रौ ९, १७,४; ५; हिश्रौ १५,७,२५.
अभ्यवहरणीय– -यानाम् शंध १७६.
अभ्यव-हार– -रः विध ४६, २२; –रेषु वाध ३,४३.

अभ्यव-हार्य– -र्ये पावा ७, ३,६९.
अभ्यव-हृत्य आपश्रौ ९,१७,१××; बौश्रौ.
**अभ्यवा( भि-अव √ अ )न् ( प्राणने )**, अभ्यवानिति शांश्रौ १७, १५, १३; १६,६;८;१७,२.
अभ्यवा(व-अ)न्य शांगृ १,२४,२[f].
**अभ्यवा( भि-अव √ अ )स् ( क्षेपणे )**, अभ्यवास्येत् कौसू ८७, २६.
**अभ्यवे( भि-अव √ इ )**, अभ्यवैति आपश्रौ ९, ६,१०†; २३, १३, १४; हिश्रौ १५,२, १६; अभ्यवयन्ति शांश्रौ १३,२९,२१;३०; काश्रौ २०,८,१७; २४,६, १०; ३६; आपश्रौ २३,१३,६; वैश्रौ ८,१४:३;९,३:१८[g] ××; हिश्रौ; अभ्यवैमि शांश्रौ २,१२,१२†[h]; अभ्यवेयात् लाश्रौ ९,१,२३;१०, १९,९;१०;२०,७; पागृ २,११, ७; मागृ; अभ्यवेयुः द्राश्रौ ११, ४,११; लाश्रौ ४, ४,१०; १०, १७,१०; आपध १, २५, ११; बौध २,१,४१; हिध १,७,७.
अभ्यवेयाय बौश्रौ १८,१३ : ६.
अभ्यवे(व-इ)त– -ते आपश्रौ १८, १३,४; हिश्रौ १३,५,१३.
अभ्यवे(व-इ)त्य काश्रौ ५, ५, २९; ६,१०,३; बौपि १,४ : ४.
अभ्यवे(व-इ)त्य,त्या– -त्यम् बौश्रौ २६, ७ : १३; –त्याः आपश्रौ ८, ७, १९; २१; वैश्रौ १६, २४ : ८.
अभ्यवे(व-ए)ष्यत्– -ष्यताम् हिश्रौ १०,८,२६.

*a*) वैतु. संस्कर्ता शब्दसूच्यां °र्धात् इति शोधुकः ? । *b*) प्रास. । *c*) सप्र. °हन्ति <> °हयन्ति इति पाभे. । *d*) नाप. (ᒪअपत्नीक-ᒧवानप्रस्थाऽन्यतम-) । *e*) °प्य इति पाठः ? यनि. शोधः (तु. सा ᒪतै. पृ १२७८ᒧ, C. च)। *f*) पाभे. पृ ३२२ h द्र. । *g*) सप्र. हिश्रौ ५, ३, ४८ **अवयन्ति** इति, आपश्रौ ८, १२, ६ **प्रतिपादयति** इति च पाभे. । *h*) सपा. **अभ्यवैमि <> उपैमि** इति पाभे. ।

**अभ्यवो**( भि-अव √उ )**क्ष्**, **अभ्यवोक्षति** कौगृ ५,५,५.

**अभ्य**(भि √अ)**श्** (व्याप्तौ), **अभ्यश्नुते** आपश्रौ २२,१४,२०××; हिश्रौ; **अभि···अश्नुते** शांश्रौ १०,१८,८; **अभि** (**अश्नोति**) आश्रौ ७,८,१; **अभ्यश्नुवते** आपश्रौ २३,१,८;१३; ३,२; १५××; हिश्रौ; **अभि···अश्नुवते** शांश्रौ १०,१८,८; **अभ्यश्नुवीत** निसू ९,११ : ३२; **अभ्यश्नुवीताम्** या १३,२.

**अभ्यानशे** बौश्रौ १८, ४५ : ८; **अभि···अश्याम्** आश्रौ ४, ५, ३†[a]; **अभि···आष्ट** आश्रौ ४, ६,३†[b].

**अभ्य**(भि-अ)**शन**- **-नात्** या २,१५; ६,१; **-नेन** या ६,३.

**अभ्या**(भि-आ)**श**- **-शे** बौपि १, ४ : ३.

**अभ्य**(भि√अ)**स्**(भुवि), **अभी···अस्मि** या ३,१०ϕ; **अभी** (**अस्मि**) बृदे १,४९; या ३,१०; **अभि** (**अस्तु**) ऋप्रा ९, ४७; †**अभि···असाम** आपश्रौ २४, १३, ३; बौश्रौ ३, २८ : १३; या ३, ८; **अभि··· स्यात्** आपश्रौ १७, २३, २; **अभिष्याम** ऋप्रा १२, २०†; **अभिस्याम**[c] अप्रा ३, १,७; शौच २,१०७.

**अभ्य**(भि√अ)**स्**(क्षेपणे), **अभ्यसेत्** लाश्रौ ७, ५,१८; सु १,१; बौगृ ३, ३, ३३; वाध २५, ४; १०; आपध १, २७,८[d]; बौध ४, १, २४.

**अभ्यस्यति** निसू ३,५ : २४××; कौसू; **अभ्यस्यन्ति** शांश्रौ ७,२६, १२; ९,१८,२; **अभ्यस्येत्** आश्रौ ८,१२,९; ९, ९, १६; आपश्रौ; हिध १,७,३३[d]; **अभ्यस्येयुः** द्राश्रौ ५,३,१२; ९,३,२१; लाश्रौ.

**अभ्यस्यते** निसू १, १२ : २६; **अभ्यस्यन्ते** माश्रौ ५, २, ९,५; **अभ्यस्येत** लाश्रौ १०, १३, ४; मीसू १०,५,२९; १२,३,११.

**अभ्य**(भि-अ)**सत्**- **-सन्तः** वाध २३,३५.

**अभ्य**(भि-अ)**सित्वा** आश्रौ ५,१५,६.

१ **अभ्य**(भि-अ)**स्त**, **स्ता**- **-स्तः** या २, १२; ४, २३; २५; **-स्तम्** शांश्रौ ३,१९,९; बौश्रौ; या ३, १०; पा ६, १,५; **-स्तया** बौशु ३:२२; **-स्तस्य** पा ६, १,३३; ७, ३,८७, **-स्ता** बौशु ३ : १८; **-स्ताः** अप्रा ३, ४, १; **-स्तात्** या ६, ३; पा ७, १, ४; ७८; **-स्तानाम्** पा ६,१,१८९; पावा ७,३, ८७; **-स्तानि** शंध ४१७; **-स्ताभिः** आश्रौ १, २, २२; आपशु ५, ३; ४; हिशु २, १०; ११; १३; **-स्ताम्** अपं ३ : ६; **-स्तेन** लाश्रौ ६,१०,७.

**अभ्यस्त-गीति**[e]- **-ति** निसू ८, २ : ५७.

**अभ्यस्त-तादि-स्वर**[f]- **-रः** पावा १,१,५१.

**अभ्यस्त-निमित्त**- **-त्ते** पावा ६, १,३३.

**अभ्यस्त-प्रसारण**[g]- **-णे** पावा ६, १,३३.

**अभ्यस्त-विधि-प्रतिषेध**[h]- **-धः** पावा ६,१,९.

**अभ्यस्त-संज्ञा**- **-ज्ञायाम्** पावा ६,१,५.

**अभ्यस्त-स्वर**- **-रः** पावा ६, १, १८४.

**अभ्य**( भि-अ )**स्य** वाश्रौ ३, २, २, ३९; ४,१०; वैताश्रौ.

**अभ्य**(भि-अ)**स्यत्**- **-स्यन्** क्षुसू २, २ : १३.

**अभ्या**(भि-आ)**स**- **-सः** शांश्रौ १३, २७, ५; आपश्रौ; या २, २; ३; पा ६, १,४; **-सस्य** अप्रा २,३, १९××; शौच; पा ३,१,६;६,१, ७;१७;४,७८;७,४,४;५८;८,३, ६४; पावा १, १, ६५; ६, १, १२[२]; **-साः** आश्रौ ७, १०, ६; ८,१,१२; **-सात्** लाश्रौ ७, १, ९;३,१५; निसू; पा ७,३,५५; ८,३,६१; **-से** लाश्रौ ७,३,१६; वाध; या १०,४२; पा १,३,७१; ८, ४, ५४; **-सेन** वाश्रौ २, २, ४,५; लाश्रौ; या ५,१२; पा ८, ३,६४.

°**अभ्यास**- **-सयोः** पावा ६,१, १०६.

**अभ्यास**° पावा ८,२,६.

**अभ्यास-चतुर्थ**- **-र्थे** काशु १,१२.

**अभ्यास-जि-वि-चतुर्**[i]- **-तुर्णाम्** पावा ८,२,७८.

**अभ्यास-दीर्घत्व**[g]- **-त्वे** पावा ३, १,६.

---

*a*) पाभे. वैप १ परि. **अभि···अश्याम्** ऋ १, १५४, ५ टि. द्र.। *b*) पाभे. वैप १ परि. द्र.। *c*) वैतु. शंपा. RW. प्रभृ. षत्वभावः। पाभे.। वैप १ सा[illegible]याम टि. द्र.। *d*) सपा. °सेत् <> °स्येत् इति पाभे.। *e*) विप. ( सौहविष- [साम-विशेष-] )। बस.। *f*) द्वस. > षस.। *g*) षस.। *h*) षस. > षस.। *i*) द्वस.।

अभ्यास-निर्जि (त>)ता- -ता माशि १५,७.
अभ्यास-प्रकृति-त्व- -त्वात् मीसू १०,५,२७.
अभ्यास-प्रतिषेधा (ध-आ) नर्थक्य[a]- -क्यम् पावा ६,१,८.
अभ्यास-प्रतिषेधा( ध-अ )र्थ- -र्थम् मीसू १०,८,२७.
अभ्यास-प्रसारणा ( ण-अ ) प्राप्ति[b]- -प्तिः पावा ६,१,३३.
अभ्यास-ब्राह्मण[c]- -णम् निसू ३, १३ : २६.
अभ्यास-योग- -गेन माशि १६, १२; याशि २,१०५.
अभ्यास रूप- -पम् पावा १,१, ५९[3]; ६,१,४५.
अभ्यास-लक्षण-प्रतिषेध[a]- -धः पावा ६,१,३०.
अभ्यास-लोप- -पः पा ६,४, ११९; पावा १,१,५१;६५.
अभ्यास-वचन- -नम् पावा ८, ३,६४.
अभ्यास-वत् निसू ३,१३ : ८.
अभ्यास-वत्- -वतः लाश्री ६, ११,३; -वति लाश्रौ ७,१,१३.
अभ्यास-विकार- -रेषु पावा ३, १,६; ७,४,८२.
अभ्यास-विनत- -तानाम् शौच ४,८२.
अभ्यास-व्यवाय- -ये शौच २, ९३; पावा ६,१,१३२.
अभ्यास-शास्त्र-त्व- -त्वात् मीसू १२,३,१३.
अभ्यास-षष्ठ- -ष्ठे काशु १,१४.
अभ्यास-संप्रसारण- -णम् पावा ६,१,१७.
अभ्यासा( स-अ )तिप्रैष[d]- -षा-भ्याम् आश्रौ ७, १, १९; -षौ आश्रौ ७,१,११.
अभ्यासा( स-आ )दि- -दिः लाश्रौ ६, १२, १३; ७, १, ३; -दीनाम् पावा ६,१,८४.
अभ्यासा( स-आ)देश-सिद्धत्व[a]- -त्वस्य पावा ६,४,१२०.
अभ्यासा ( स-आ ) नर्थक्य- -क्यम् मीसू १०,२,११.
अभ्यासा(स-अ)नुपपत्ति- -त्तौ काश्रौ २४,७,१८.
अभ्यासा( स-अ )र्थ- -र्थम् पावा ६,१, १६; -र्थे ऋप्रा १३, ४९; कौशि ६१; माशि १,३; पाशि ३०; याशि १,४९.
अभ्या( भि-आ )सम् आपश्रौ १६, २८, १; १७, ५, १; २०, १२, १०; बौश्रौ १४, ९ : ३६; वैश्रौ १८, २० : २१; १९, ५ : १३; द्राश्रौ २,४,२१; लाश्रौ १,८, १४; ७,९,१४[2]; ९,२,६; क्षुसू २,१६ : १९; निसू ९,६ : २८.
१अभ्यस्त- अभ्य( भि √अ )स् ( क्षेपणे ) द्र.
२अभ्य(भि-अ)स्त[e]- > अभ्यस्तम्- √इ, अभ्यस्तमियात् आश्रौ ३, १२, १६ ; २९ ; १२, ८, २२; बौश्रौ ९, १७ : २; ४; २६, २२ : ६; आगृ ३, ७, १; मागृ १, ३, १; अप्राय १, २[2]; ६,८; ९[3]; अभि...अस्तमियात् माश्रौ ५, २१,१४[f].
अभ्यस्तम्-इत- -तः मागृ १, ३, २;३; गौध २३,२१; -तयोः शांश्रौ ३, १९, १७; -ते बौश्रौ २४, २२ : ९; माश्रौ ४,३,४८.
अभ्यस्य, °स्यत्- अभ्य( भि √अ )स् (क्षेपणे) द्र.
?अभ्या इयम् निसू ३,८ : ८.
अभ्या(भि-आ) √कृ > अभ्या-कारम् आपश्रौ २,४,४-६[g]; बौश्रौ २०, १०:२; माश्रौ २, ४,४-६[g]; वैश्रौ ५, २ : १५; हिश्रौ १,७,७-९[g].
अभ्या( भि-आ ) √क्रन्द्, अभ्या-क्रन्दति वाधूश्रौ ४, ३० : २१.
अभ्या(भि-आ) √क्रुश्, अभ्याक्रोशन् शांश्रौ १४,५०-५१,१.
अभ्या ( भि-आ ) √ख्या > अभ्या-ख्यात, ता- -ता शंध २५१; -ताय कौसू ४६,१.
अभ्या(भि-आ) √गच्छ्,गम्, अभ्या-गच्छति आपध २, ६, ३; ५[h]; हिध २, २, ३; अभ्यागच्छेत् आपध २, ५, ४; ७, १२; १३; १५; हिध २, १, ८४; २, ३२; ३४;३६.
अभ्याजगाम बृदे ४,१; २.
अभ्या-गच्छत्- -च्छन् भागृ १,११: ७; हिगृ १, १२,७; हिध २, २, ५[h].
अभ्या-गत,ता[i]- -तम् वैगृ २,१५: १३; ६, १८ : ६; वाध ८,१२; आपध २, ४, १९; हिध २, १, ७२; -ताः द्रागृ ३,३,४; -तान् बौध २, ३, ११; विध ५९,२७;

a) षस.>षस. । b) द्वस.>षस. । c) नाप. (ब्राह्मण-विशेष-) । कस. । d) द्वस. । e) अस. वा. क्रिवि. । f) सप्र. आपश्रौ ५, २९, १३ अभिनिम्रोचेत् इति पाभे । g) सप्र. अभ्याकारम् <> अभ्याहवम् इति पाभे. । h) सपा. अभ्यागच्छति <> अभ्यागच्छन् इति पाभे. । i) विप. (गो- [द्रागृ.]), नाप. (अतिथि-, वर-) ।

९१,७; वैध १,४,२;२,४,६; ३, १,३; –ताय वाध ४,८; –तेभ्यः बौगृ २,९,२१; वैगृ ६,१७ : ७; वैध १,५,४.

अभ्या-गमन— -नम् आपध १, १, ३३; २, ६; हिध १, १, ३१; ३९.

अभ्या-गम्य आपध २, ५, ४; ६,७; हिध २, १, ८४; २, ७; अभ्या-गम्यऽअभ्यागम्य वैश्रौ १०, १८ : ५.

**अभ्या**( भि-आ ) **√गा,** †अभि··· आगात्[a] आपश्रौ ४, १०, ७; भाश्रौ ४,१५,७.

†**अभ्या**(भि-आ)**गार**[b]— -रे[c] आगृ २,३,३.

**अभ्या-घात**— प्रमृ. अभ्या √हन् द्र.

**अभ्या**(भि-आ)**√घृ,** अभि···आघारयेत् हिश्रौ १५,४,४९.

**अभ्या**( भि-आ )**√चर्> अभ्या-चार**— -रे मागृ २, ७, १†[c]; –रेण हिगृ २, १६,८[c/d]†.

**१अभ्या**(भि-आ)**ज्य**[e]— -ज्यम् वाश्रौ १,४,१,८.

**२अभ्याज्य**[f]— -ज्यानाम्[g] } वैध ४, १,८.
आभ्याज्य— -०ज्य
अभ्याज्य-वत्

**अभ्या**( भि-आ )**√तञ्च्** , अभ्यातनक्ति बौश्रौ १, १ : ४; ३ : ३३; २०,४ : ३२.

अभ्या-तक्त— -क्तम् बौश्रौ २०,४ : ३४.

**अभ्या**( भि-आ ) **√तन् > अभ्या-तान**[h]— -नाः बौश्रौ २६, ९ : ३†; वैगृ १,१७ : १२; मागृ १, ११, १५; –नान् बौश्रौ †२, ११ : १७; १३ : ६; १४,१६ : १६; १७; २५; २३, ७ : १२; १३;२९,१३ : १९; हिश्रौ २२, १,३१; आग्निगृ १,१, २ : १७; ६, २ : ३; ६; बौगृ १, ४, ३२; ३,१३, ३; वैगृ ६, २ : ३; हिगृ १,३,१०; –नानि अप ६६, २, ५; –नेषु आपश्रौ १९,१७,१९; बौश्रौ २३,७ : ११; हिश्रौ २२, १,३१; आग्निगृ १, १, २ : १७; हिगृ १, ३, ११; –नैः कौसू १३७,४२; अप ३७,१६,१.

अभ्यातान-मन्त्र— -न्त्रान् अप ९, ६, ५; –न्त्रैः अप १९[२], ३, ५.

अभ्याताना( न-अ )न्त[i]— -न्तम् अप १८[२],६,२; १५,१.

?**अभ्यातानाम्** चाअ ३८ : १४.

**अभ्या**(भि-आ)**त्म**— -?त्मन्[j] हिगृ १, ५,८; –त्मम् आश्रौ १, ३, २८; ७,१; १३,१; २,४, १२; ५,५, १२; ६, १२, ११; काश्रौ १६, ७,१२; १७,२,१; १८, २, ११; आपश्रौ ३, २०, ५; भाश्रौ ३, १८,४; वैश्रौ ७,१ : ११; हिश्रौ २, ८,३५; लाश्रौ २, ११,२०[k]; आगृ १,७,१४; कौगृ १, १, ९; शांगृ १,५,७; गोगृ ३, ९, १८; द्राग्र ३, ३, २४; कौसू ५६, १६.

अभ्यात्म-तर— -रम् आश्रौ ५, ५, १२.

अभ्यात्मा(त्म-अ)ग्र[l]— -ग्राणि आगृ १,१७,८.

**अभ्या** ( भि-आ ) **√दह् > अभ्या-दाह्य**[l]— -ह्येन आपश्रौ ९,३,२२; भाश्रौ ९,५, १२; हिश्रौ १५,१, ६९.

**अभ्या**( भि-आ )**√दा** ( दाने ) **> अभ्या-दान**— -ने पा ८,२,८७.

अभ्या-दाय माश्रौ ६,१,१,२७.

**अभ्या**(भि-आ)**√द्रु,** अभ्याद्रवन्ति बौश्रौ १०, २८ : ९; २९ : ३; ५; ७; ९; ११.

**अभ्या**(भि-आ)**√धा,** अभ्यादधाति शांश्रौ २, ८, २२××; काश्रौ; आपश्रौ २,१२,६[m]; या ६,२२; अभ्याधत्तः बौश्रौ ५,७ : २; ७, १४ : ६; हिश्रौ ८, ७, २०; अभ्यादधते माश्रौ २, ५, ४, ८; अभ्यादधति आश्रौ ३, ६, २७; ६, १२, ३; आपश्रौ; †अभ्यादधामि काश्रौ १९, १,११; कागृ ४१,२३; शुअ २,४२३; अभ्यादध्यात् आश्रौ २, ५, ११; आपश्रौ.

अभ्याधापयति आग्निगृ १, १,

*a*) पाभे. पृ २९२ m द्र. । *b*) प्रास. । *c*) पाभे. पृ १२८ i द्र. । *d*) अभ्याचारे इति संस्कर्तुरभिमतः पाठः । *e*) विप. ( ⌊आज्योत्सिक्त-⌋ जीव-तण्डुल- ) । बस. । *f*) व्यप. (ऋषि-विशेष-) । सप्र. ३अज— > -जानाम्, २आज— > -०ज, २आज्य— > -०ज्य इति पाभे. । *g*) आज्यानाम् इति पाठः ? यनि. शोधः । बहु. < आभ्या° इति । *h*) नाप. (मन्त्र-विशेष-, होम-विशेष-)। *i*) विप. । बस. । *j*) पाठः ? –त्मम् इति शोधः (तु. भाष्यम्, Böht ⌊ZDMG ४३,५९९⌋ ) । *k*) सप्र. द्राश्रौ ९, १, ५ अध्यात्मम् इति पाभे. । *l*) नाप. ( ⌊गृहदाहक-⌋ अग्नि-) । गस. । *m*) सप्र. भाश्रौ २, १२,३ अभ्याधाय इति, हिश्रौ २, १, ३ आदधाति इति, वैश्रौ ६, १ : ६ प्रक्षिप्य इति च पाभे. ।

४ : २; हिगृ १,७,१.

अभ्या-धान- -नात् बौश्रौ २४,१५ : ३; -ने बौश्रौ २०, १४ : २१; १६ : ४३; २२,३ : १०; १३.

अभ्याधान-प्रभृति- -ति बौश्रौ १९,५ : १.

अभ्या-धापयत्- -यन् बौश्रौ ९, १९ : २२; २० : ११; बौगृ २, ५,९; ३५; ६६; ३,२,१०; २३; ३५; ४८; ३,१२; ४, १५; ३१.

अभ्या-धाय आपश्रौ ३, ९, १२××; बौश्रौ; भाश्रौ २,१२,३[a].

अभ्या-धास्यत्- -स्यन् आपश्रौ १२, ३,५; गोगृ १,१,७.

अभ्या-धीयमान,ना- -नम् बौश्रौ ३, १७ : २७; -नयोः बौश्रौ ३, १६ : २६; २०,२३ : ४३.

अभ्या-धेय- -यम् वाधूश्रौ ३, १९ : १२; -यानाम् कौसू ७,२८.

अभ्या-हित- -तस्य माश्रौ १,३, १, ५;१५; वागृ २, ४; -ते बौश्रौ २४,१५ : १३.

अभ्याहिता(त-अ)ग्नि- -ग्निम् मागृ १,१४,६; वागृ १५,१७.

अभ्या(भि-आ)√ध्यै, अभ्याध्यायन् वाधूश्रौ ४,११५ : १.

अभ्या(भि-आ)√नी>अभ्या-नायन् आपगृ १२,९?[b].

अभ्या-नीय आश्रौ ३,११,९; हिश्रौ ५,१,२२; आपगृ ४,९; २०,४.

अभ्या(भि√आ)प्, अभ्याप्नोति वाधूश्रौ ४,१०० : १६.

अभीप्सति अप १३,२,८; कौशि ३३.

अभी(भि-ई)प्स(त्>)न्ती- -न्तीम् बृदे ६,१५४.

अभी(भि-ई)प्सित- -तम् विध ९२,२.

अभ्या(भि-आ)√पत् (गतौ), अभ्यापातयेत् बौशु २ : २०.

अभ्या(भि-आ)√पद्, अभ्यापद्येत आगृ ३,९,६.

अभ्या-पन्न- -न्नः या १२,१८.

अभ्या-पादम् या ७,२६.

अभ्या(भि-आ)√बाध्>अभ्या-बाध[c]- -धः अप्राय ४,१.

अभ्या(भि-आ)√भू, अभ्याभवेत् कौगृ ३,९,४७[d].

अभ्या(भि-आ)√यत्, अभ्यायातयति बौश्रौ १०, ४२ : २१; ४६ : १८;२१; ११,११ : ११; वैश्रौ १९,५ : ३४.

अभ्या(भि-आ)√रुह्, अभ्यारोहति वाधूश्रौ ४,९२ : ७;१०; हिश्रौ १७, ६, १९; अभ्यारोहन्ति बौगृ ३,१२,११; बौपि १,१७ : ३५; २, ९, २१; अभ्यारोहेत् आपश्रौ ७,३,५; हिश्रौ ४,१,३७.

अभ्यारुरोह बौश्रौ १८,१३ : ८.

अभ्यारोहयेत् आग्निगृ ३, ७,२ : १६.

अभ्या-रुह्य बौश्रौ १,५ : २.

अभ्या-रूढ- -ढः बौश्रौ २०, २४ : ५;१२; २०; २३,१७ : १७.

अभ्या-रोह- -हाः वाधूश्रौ ३,७६ : ६.

अभ्या-रोहण->°णीय- -यस्य लाश्रौ ८,११,८; ९,१, ७; ८; -याय लाश्रौ ९,१, २०; -येन आश्रौ ९,३,२; लाश्रौ ९,३,१३.

अभ्या(भि-आ)√वृ (प्रतिघाते), अभ्यावारयन्ति निसू ५,२ : ८.

अभ्या(भि-आ)√वृत्, अभ्यावर्तते शांश्रौ ७, ४, १६; आपश्रौ; अभ्यावर्तन्ते आपश्रौ १४,५, ४; हिश्रौ ९,८,२; अभ्या(वर्ते) अत्र १०, ७†; अभि···आवर्तन्त, अभि[2](आवर्तन्त) वाधूश्रौ ४, २२ : ७; †अभ्यावर्तस्व बौश्रौ १०,२६ : २; कागृ; अभ्यावर्तेत आपश्रौ ८,२२,१६; २१,३, ४; बौश्रौ २१,४ : ९;८ : २५;१६ : १९; २२, ११ : ८; २५, ३४ : ४; भाश्रौ १, २, ५; हिश्रौ १६, २,३; द्राश्रौ १२,१,१३; अप्राय ४, २; अभ्यावर्तेरन् भाश्रौ ६, १६,२७; ९,१७, १३; वैश्रौ १, १३ : १.

†अभ्याववृत्स्व आग्निगृ ३, ५, ६ : ८; कागृ ११,२?[e]; बौगृ १, ८,५; बौपि १,४ : २४; †अभि- ···आववृत्स्व[f] कौसू ७२,१४.

अभ्यावर्तयति वाश्रौ २, १, ६, १०; अभ्यावर्तयन्ति बौश्रौ ६, २४ : १६; हिश्रौ १६, ८, ४; अभ्यावर्तयेत् बौश्रौ २१, १४ : १८; २२,२ : ६; २३, १६ : ३; २६,१५ : २२; भाश्रौ १, २,५; शांगृ ४, ८,२०; अभ्यावर्तयेयुः बौश्रौ २०, १ : २०; २३, ८ : २०; २२; आग्निगृ ३, ६, ३ : ११; बौपि १,११ : ९.

अभ्या-वर्तन- -ने बौश्रौ २१, १४ : १७.

अभ्या-वर्तम् शांश्रौ १५, ११, ५; वाधूश्रौ ४,८१ : २; ४-७.

---

*a*) पाभे. पृ ३२६ o द्र. । *b*) पाठः? °नायम् (णमुलन्तम्) इति शोध इति भाष्ययोः संमतः। हरदत्तस्तु [पक्षे] अभ्यानयत्-> -यन् इति वा वर्णोलोपात् यनि. [=अभ्यानाययन्] इति वा। *c*) भाप.। गस.। *d*) सप्र. शांगृ ४,७,५२ भवेत् इति पाभे.। *e*) अभ्य° इति पाठः? यनि. शोधः। *f*) पाभे. वैप १ परि. द्र.।

**अभ्या-वर्तयत्-** -यन् हिश्रौ **११**, ७,६५.

**अभ्या-वर्तयित्वा** कौगृ **३**,९,५९;४, १,१.

**अभ्या-वर्तिन्**[a]- -र्ति बौश्रौ **१८**, २७ : १-१०; -†°र्तिन् काश्रौ **१६**, ५, १५; आपश्रौ; -र्तिनम् बृदे **५**,१३८; -र्तिने ऋअ **२**,६, २७; -र्ती बृदे **५**,१२४.

**अभ्यावर्तिनी**[b]- -नीः आग्निगृ **२**, ६, **५** : ७[c]; ७, २ : १९; ९ : ४६; बौगृ **२**, ९, १०; भागृ **३**,२ : ८;१५ : १६;२१ : १०; वैगृ **६**,१६:६; हिगृ**१**,२६, ११; बौध **३**, ७,११; -नीभिः वैश्रौ **१८**,८ : ७;१० : ११.

**अभ्यावर्ति-साञ्जय**[d]- -यौ बृदे **५**, १३९.

**अभ्या-वृत्त-** -त्तः अप्राय **३**, ३; -त्तम् काश्रौ **७**,४,३५.

**अभ्या-वृत्ति-** -त्तिः शांश्रौ **३**,२,९; ३, ९; मीसू **५**,२,३.

**अभ्या-वृत्य** काश्रौ **७**, ४, १५; आपश्रौ **३**,१८,५; **२२**,९, १६; †बौश्रौ; हिगृ **१**,२०,२?[e].

**अभ्याश-** अभ्य(भि√अ)श्(व्याप्तौ) द्र.

**अभ्या**(भि-आ)**√शंस्**, **अभ्याशंसते** वाधूश्रौ ३,६९ : १४; १५.

**अभ्या**(भि-आ)**√श्रु**, **अभ्याश्रावयेत्** आपश्रौ ९, १२, १; आपध **२**, २२, २०; हिध **२**, ५, १५१; **अभ्याश्रावयेयुः** आश्रौ **१२**, ८, २०.

**अभ्या-श्रावण-** -णम् द्राश्रौ **७**, ३, २९; लाश्रौ **३**, ३, २९; -णे वैताश्रौ **२१**,१७.

**अभ्या-श्रावित-** -ते आश्रौ **३**, १३, १०.

**अभ्यास-** प्रमृ. अभ्य(भि√अ)स् (क्षेपणे) द्र.

**अभ्या**(भि-आ)**√सञ्ज्**, **अभ्यासजति** आपश्रौ **१४**,३४,३; ४[२]; हिश्रौ **१५**,८,४६;४७[२].

**अभ्या-सक्त-** -क्तः आश्रौ **१०**, ३, ४; निसू ९,१३ : १५.

**अभ्या-सङ्ग-** -ङ्गः निसू ९,१३ :१६.

**अभ्या-सङ्ग्य**[f]- -ङ्ग्यः आपश्रौ **२२**, २०,५; २२, ९; २३, १२; २४, ४;५; ११; १२; बौश्रौ **१६**, ३२ : ६; हिश्रौ **१७**, ८, १५; २८; ३६; लाश्रौ ९, १२, १५; -ङ्ग्येन हिश्रौ **१७**,७,१८.

**अभ्यासङ्ग्य-पञ्चशारदीय**[d]- -ययोः वैताश्रौ **४१**, १५; १९.

**अभ्यासम्** अभ्य(भि√अ)स् (क्षेपणे) द्र.

**†?अभ्य्-आसम्**[g] वैताश्रौ **३४**,९.

**अभ्या**(भि-आ) **√सिच्** > **अभ्या-सिच्य** गोगृ १,८,१२.

**अभ्या**(भि-आ)**√सृज्**, **अभ्यासृजति** माश्रौ **२**,४,३,१९; ६,२१.

**अभ्या**(भि-आ)**√हन्**, **अभ्याहन्यात्** शैशि **१५४**; याशि **१**,२४.

**अभ्या-घात-** -तः बौगृ **४**,४,१.

**अभ्या-घातिन्-** पा **३**,२,१४२.

**अभ्या-घातुक-** -कम् अप **१**,३०,४.

**अभ्या-घात्य-** > °त्य-सामन्[h]- -मानः निसू **३**,५ : २५.

**अभ्या-हित-** प्रमृ. अभ्या√धा द्र.

**अभ्या**(भि-आ)**√हृ** > **अभ्या-हृत्य** वैश्रौ **१२**, १३ : १; हिश्रौ **१५**, ४,८; हिगृ **२**,७,२;८,६.

**अभ्या**(भि-आ)**√ह्वे**, **अभ्याह्वयते** बौश्रौ **१४**,१० : १××; वाधूश्रौ; **अभि···आह्वयते** बौश्रौ **७**,१७ : ४; २६ ××.

**अभ्या-हव-** -वम् माश्रौ **१**,२,५, २[i].

**अभ्या-हूत-** -तः बौश्रौ **१४**, १० : १७; ३४.

**अभ्युक्त-** अभि√वच् द्र.

**अभ्यु**(भि√उ)**क्ष्**, **अभ्युक्षते** शांश्रौ ८,११,१३; आग्निगृ **२**, ६, १ : १५; **अभ्युक्षति** आपश्रौ **१५**, १४, १३; भाश्रौ; **अभ्युक्षन्ति** जैश्रौप **१५**; **अभ्युक्षेत्** भागृ **२**, ३० : १०××; गोगृ; **अभ्युक्षेरन्** आश्रौ **६**,१३,१२; द्राश्रौ **६**, ४, ८; लाश्रौ **२**,१२,९.

**अभ्यु**(भि-उ)**क्षण-** -णम् वैगृ **१**,५ : ६××; गोगृ.

**अभ्युक्षण-प्रभृति-** -ति द्राश्रौ **११**,४,१७; **१३**, १,१२;४, १; लाश्रौ **४**, ४, १६; **५**, १, १०; ४, ७.

**अभ्युक्षणा** (ण-आ) **दि-** -दि कागृ **६०**, ८.

**अभ्यु**(भि-उ)**क्षत्-** -क्षन् वैताश्रौ **५**, ११; गोगृ **४**,९, १५; १८; द्रागृ **४**,४,१;३.

**अभ्यु**(भि-उ)**क्षित-** -तम् वैश्रौ **१२**,

---

*a*) व्यप. (बृदे **५**,१२४)। शिष्टं वैप **१**, परि. च द्र.। *b*) नाप. (ऋक्चतुष्टय-, आहुति-विशेष-)। *c*) °र्तनीः इति पाठः? यनि. शोधः। *d*) द्वस.। *e*) पाठः ? °भ्यावर्त्य इति शोधः (तु. मूको., भाष्यम्, Böht [ZDMG **४३**,६००])। *f*) नाप. (क्रतु-विशेष-)। गस.। *g*) पाठः?। सप्र. काश्रौ **१३**, ३,२६ आपश्रौ **२१**,२०,३ वाश्रौ **३**,२,५,४३ हिश्रौ **१६**,६,४१ विशिष्टः पाभे.। *h*) विप. (छन्दोम-)। बस.। *i*) पाभे. पृ ३२५ g द्र.।

१९ : १२; –तानि शंध १७६.
अभ्यु(भि-उ)क्ष्य आश्रौ २, ६, १०; शांश्रौ; हिध १,५,७[a].
अभ्यु(भि √उ)च्, †अभि ··· उच्यति बौश्रौ १३,४ : ७; ९.
अभ्यु(भि-उद्>)च्√चि (चयने)
अभ्युच्-चय- -येन आपध २, २०, ७; हिध २,५,९४.
अभ्यु(भि-उद्>)च्√छन्द्>अभ्यु-च्-छन्दयत्- -यन् बौध २, २, ७४; ३,२,२.
अभ्युच्छ्रि (भि-उद् > च् √श्रि), अभ्युच्छ्रयस्व जैश्रौ १४ : २०.
अभ्युच्-छ्रित- -तेन अप ५८[२],२,८.
अभ्यु(भि-उद्>)ज्√जुप्, अभ्यु-ज्जुपस्व अप्राय ४,४†.
अभ्यु(भि-उद्>)ज्√ज्वल्, ?अभ्यु-ज्ज्वलेत् आग्निगृ ३,५,८ : १२[b]; १५[c];६, ४ : ८[b].
अभ्युज्ज्वलयेत् बौपि १, ७ : १३; १३ : ८; अभ्युज्ज्वलयेयुः बौपि १,७ : १६.
अभ्यु(भि-उद्>)त्√कुप्>अभ्यु-त्-कुप्य बौश्रौ १०,१० : १०[d].
अभ्यु (भि-उद्>) त् √क्रम्, अभ्युत्क्रामयति आगृ १,७,१९; अभ्युत्क्रामयन्ति गोगृ २,२,१०. अभ्युत्क्रमयेत् जैगृ १,२१: २७.
अभ्युत्-क्रम्य वैताश्रौ ९,१६.
अभ्युत्था(भि-उद्√स्था), अभ्युत्तिष्ठेत् द्राग्ृ ४,१,१६.
अभ्युत्-थाय आग्निगृ २, ६, ५ : २१; बौगृ २,९,१८.
अभ्युत्-थास्यत्- -स्यन् माश्रौ ५, १,५,३०.

अभ्युत्-थित,ता- -तः बौगृ १, ८, २; अप १, २७-३०, ४; –तम् या ९, ४; –तस्य अप १, ३२, २; –ताम् अप १,३६,१-६.
अभ्यु(भि-उद्>)त् √पृ (पूरणे)>
अभ्युत्-पूर्य वाश्रौ १,३,२,७.
अभ्यु(भि-उद्>)त् √सद्, अभ्यु-त्सादयां√कृ, अभ्युत्सादयामकः पा ३,१,४२.
अभ्यु(भि-उद्>)त् √सिच्,ञ्च्, अभ्युत्सिञ्चेत वैश्रौ २०, २९ : ४[e].
अभ्युत्-सिञ्चत्- -ञ्चन् शांगृ ३, ८, ४.
अभ्यु(भि-उद्)त्√सृज्,अभ्युत्सृजति बौश्रौ १६,२७ : १९;२०.
अभ्यु(भि-उद्)त्√सृप् > अभ्युत्-सृप्य बौश्रौ १८,९ : २८.
अभ्यु(भि √उ)द्,न्द्, अभ्युन्दति माश्रौ २,१, १, २१; मागृ १, २१,३; अभ्युन्देत् कागृ ४०,१० अभ्युनत्ति हिश्रौ ५,१,४४;अभ्यु-न्द्यात् वागृ ४,८; १५; जैगृ १, ११ : १०.
२अभ्यु(भि-उ)द्य माश्रौ ६,१,२,१७; वैश्रौ ८,८ : ३; कौसू ३१, १; ११.
अभ्यु(भि-उ)न्दन- -ने वागृ ४,३.
अभ्युद(द्-अ)य- अभ्युद् √इ द्र.
अभ्युदा(भि-उद्-आ) √नी, अभ्यु-दानयते वाश्रौ १, ६, ५, १२; अभ्युदानयति माश्रौ १, २, ४, २४ ××; हिश्रौ; अभ्युदानयन्ति माश्रौ २, ३, २,२४; वाश्रौ ३, २,७,१०; कागृ ३७, ४; अभ्यु-

दानय माश्रौ २,३,२,९†[f].
अभ्युदा-नयत्- -यन् गोगृ २,१,१८.
अभ्युदा-नीय माश्रौ २,२,४,१९.
अभ्युदा(भि-उद्-आ)√हृ, अभ्युदा-हरति आपश्रौ १,१०,१४; माश्रौ १,२,६, २६;७,१,३६; २, ५, २,१; ५, २,४, १२; ६, २,५, १५; वाश्रौ १,७,४,२४; अभ्यु-दाहरन्ति माश्रौ २, ३, १, ९; अभ्युदाहरेत् माश्रौ ९, १७,१४; हिश्रौ १५,४,३०.
अभ्युदा-हृत- -तः वाश्रौ १, ५, ४, ४; –तम् माश्रौ १, ६, २, ३; –ताः आपश्रौ १५, १,८; भाश्रौ ११,१,११; हिश्रौ २४,१,५.
अभ्युदा-हृत्य आपश्रौ ३,५,७; १४, २१,९; भाश्रौ ३,५,१२; आपगृ २१,९; भागृ २,८: १०.
अभ्युदा-ह्रियमाण- -णेषु माश्रौ ५, २,१६,११.
अभ्युदि(भि-उद्√इ), अभ्युदयत् वाधूश्रौ ३,७० : २.
अभ्युदेति आपश्रौ ९,४, ६†; बौश्रौ १४, २४ : १५[२]; २१; २६; २८; १७,५० : ६; २०†; भाश्रौ ९,६,२; वैश्रौ २०, १२ : ९; हिश्रौ १५, १,७६; अभ्युदि-यात् आश्रौ ३, १२, २९ ××; काश्रौ; आपश्रौ ५, २९, १३[g]; अभि ··· उदियात् भाश्रौ ५,२१, १४[r].
अभ्युद(द्-अ)य- -यः हिश्रौ ३, १,३; आपध २, २७, ७; त्रिध ७७,६; हिध २,५,२२६; पापवा ९; –ये काश्रौ २५, ३, २०;

*a*) सपा. अभ्युक्ष्य<>प्रोक्ष्य इति पाभे.। *b*) पाठः? °ज्ज्वलयेत् इति शोधः (तु. बौपि.)। *c*) पाठः? °ज्ज्वलयेयुः इति शोधः (तु. बौपि.)। *d*) उत्कुप्य इति संस्कर्तुः टि.?। *e*) सप्र. अभ्युत्सि°<>उत्सि° इति पाभे.। *f*) पाभे. वैप १, ९०० a द्र.। *g*) सपा. अभ्युदियात्<>अभि ··· उदियात् इति पाभे.।

वैताश्रौ २१,१७; आपध १,२०, २; हिध १,६,१६; मीसू ६, ५, १; ९,४,३९; १०,३,५५; -येन आशि १,२.

आभ्युदयिक[a]- -कम् शांगृ४, ४,१; अप ४४, १, ३; ५; वाध १,४६; -कानि गौध ११, १९; -के आगृ ४,७,१; अप ४४,१, ९; -केषु बौगृ ३, १२, २; वाध ३,७१[२]; १५,१०.

अभ्युदय-श्राद्ध[b]- -द्धम् वैश्रौ १, ४ : ७; वैगृ २, १ : ३; -द्धे वैगृ ६, २ : ११.

अभ्युदि(दृ-इ)त,ता[c]- -तः आपश्रौ १०,१५,६; बौश्रौ; -तम् शांश्रौ २,७,७XX कौसू; -तयोः शांश्रौ ३, १९, १७; -ता बौश्रौ १३, १:७; -ताः अप ५२,१४,२;३; -ते आश्रौ ३,१२,१७;१३,१३; शांश्रौ; आपश्रौ ९,४,७[d]; हिश्रौ १५,१,७७[d].

अभ्युदित-मात्र- -त्रे आग्निगृ २, ४,११ : ५.

अभ्युदिते(त-इ)ष्टि[e]- -ष्टिः शांश्रौ ३, २, १; माश्रौ ३, १, १६; -ष्टयाम् बौश्रौ २०,१ : ४६.

**अभ्यु**(भि-उ)**दी**(दृ√ई)**र्**, अभ्युदीर्यते अप ६४,४,८.

**अभ्यु**(भि-उ)**दू** (दृ√ऊ)**ह्** (वहने), अभ्युदूहति हिश्रौ १४, १, ३७; आपशु १४,३.

**अभ्यु** (भि-उ)**दे**( दृ-आ√इ ), अभ्युदायन्ति आपश्रौ २०, २२, ९; माश्रौ २,३,२,१०.

अभ्युदे(दा-इ)त्य माश्रौ १,२२,१०; आपध २,७,१३; १५; हिध २, २,३२;३४.

**अभ्यु**(भि-उ)**द्√दिश्**, अभ्युदिशति मागृ १,९,१३;१७,५.

**अभ्यु** (भि-उ) **द्√दृश्** > अभ्युद्-दृष्ट- -ष्टानि अप्राय २, ३; -ष्टे काश्रौ २५,४,४४.

अभ्युद्दृष्टे( ष्ट-इ )ष्टि[e,f]- -ष्टिः शांश्रौ ३,३,१.

**अभ्यु**(भि-उ)**द्√द्रु** > अभ्युद्-द्रुत्य वैश्रौ ५,३ : १५.

**अभ्युद्धृ**(भि-उद्√हृ), अभ्युद्धरामि अप्राय १, २; अभ्युद्धरेत् काश्रौ २५, ३, ११; अप्राय १, १[२g]; २[२]; २, ७; ५, ४; अभ्युद्धरेयुः आपश्रौ ९, १०, ११; १२; बौश्रौ १३, ७ : ११; भाश्रौ ९, १४, ३; माश्रौ ३, ३, ४; वैश्रौ २०,१८ : ५; हिश्रौ १५,३,२१.

अभि···उद्ध्रियते बौश्रौ १३,७ : १५; हिश्रौ १५,३,२३; अभ्युद्ध्रियन्ते निसू ३, १ : २२; अभ्युद्धियेत बौश्रौ १३, ७ : १५; हिश्रौ १५,३,२३.

अभ्युद्-धरत्- -रताम् वाध १५, १८.

अभ्युद्-धृत,ता[c]- -तः कौसू ७३,४; -तम् अप्राय १,२[२]; -ता बौश्रौ १३,१ : ६; -ते शांश्रौ ३,४,१.

अभ्युद्-धृत्य शांश्रौ २, १४,५; ४, १२,२; कौसू ७४,११.

१अभ्युद्य अभि√वद् द्र.

२अभ्युद्य अभ्यु(भि√उ)द्,-न्द् द्र.

**अभ्यु**( भि-उ )**द् √यच्छ्, यम्**, अभ्युद्यच्छति वाश्रौ २,१,३,३.

अभ्युद्-यत- -तम् आपध १, १९, ११; हिध १, ५, ११३; -तान् विध ५७,१०; ,११.

**अभ्युन्दन**- अभ्यु(भि√उ)द्, न्द् द्र.

**अभ्यु**(भि-उद्>)**न्√नी**, अभि··· उन्नयन्ति आपश्रौ २२,१०,११; †अभ्यभि···उन्नयन्ति काश्रौ २२,१०,५; लाश्रौ ८,१०,१२; †अभि···उन्नय आपश्रौ १३, २१,३; हिश्रौ ९,५,४२;†अभ्युन्नयध्वम् काश्रौ ९,११,३;अभ्युन्नयेत हिश्रौ १६,१,४९; अभ्युन्नयेत् आपश्रौ १४,१८,३; माश्रौ ३, ६, १८; २१; अभ्युन्नयेयुः हिश्रौ १५,५,५; लाश्रौ ८,१०, १२.

अभ्युन्नीयेरन् बौश्रौ २३, ८ : ३०.

अभ्युन्-नायम् आपश्रौ १४,२४,७; २७,१.

अभ्युन्-नीत- -तम् शांश्रौ १३,१२, ७; -तान् बौश्रौ २१, २० : ९; १०; वैश्रौ १५, ३३ : ६; हिश्रौ ९,३,५०; -तानाम् माश्रौ २, ४, १, २८; हिश्रौ ८, ७, ६४; ९, २, ७[२]; -तेभ्यः हिश्रौ ९,२, ७; -तेषु मीसू ३,२,२९; -तैः वैश्रौ १५,३० : ९.

अभ्युन्-नीय काश्रौ २५, १२, २५; आश्रौ ९,५,९;६,४XX; बौश्रौ.

**अभ्यु**(भि-उ) **प√कृ**>अभ्युप-कृत- -ताः निसू ८,३ : ४; ८ : ३४.

---

*a*) भाप. ( वाध १, ४६ ), नाप. ( वृद्धि-श्राद्ध- )। यथाक्रमं स्वार्थे च तदस्यप्रयोजनमित्यर्थे च ठकुठञौ प्र.। *b*) मलो. कस.। *c*) नाप. स्त्री. ( इष्टि-विशेष- )। *d*) पाभे. पृ १६१ e द्र.। *e*) नाप.। कस.। *f*) °द्द° इति पाठः ? यनि. शोधः ( तु. काश्रौ २५, ४, ४४ c. च )। *g*) °भ्यु इति पाठः ? यनि. शोधः।

**अभ्यु** (भि-उ) प √**गम्** > अभ्युप-गम्य शंध ३९०;४४२; बौध २, २,१५.

**अभ्यु**(भि-उ)प √**दिश्**, अभ्युपदिशन्ति बौश्रौ २६, ७ : ३; बौशु ३ : ३०.

**अभ्यु**(भि-उ)प √**धा**, अभ्युपदधाति आपश्रौ १६,१५,८; १७, ३,७; १०; बौश्रौ १, ८ : ६; हिश्रौ ११,६,६; १२,१,४४.

**अभ्युप-यत्**– अभ्युपे (प √इ) द्र.

**अभ्यु**(भि-उ)प √**विश्**, अभ्युपविशति पागृ १, ३, ८; भागृ २,२९ : ८. अभ्युपविशामि हिगृ १, १२, ४†[a]; अभ्युपविशेत् भाश्रौ ११,१८,९.

**अभ्यु** (भि-उ)प √ **सिच्** > अभ्युपसेक– -कम्[b] आपश्रौ १०,६,७; भाश्रौ १०,४,६; हिश्रौ १०,१,४०.

**अभ्यु**(भि-उ)प √**हृ**, अभ्युपहरेयुः अप्राय २,९.

**अभ्युपा**(भि-उप-आ) √**कृ**, अभ्युपाकरोति आपश्रौ १२,२९,५. अभ्युपाकुर्यात् आपश्रौ १४,२९, १; माश्रौ ३,६,१९; हिश्रौ १५, ७,१४; अप्राय ६,३.

अभ्युपा-कारम् बौश्रौ १४, २६ : १२; १५, ६ : १७; २१ : २; ५; २४ : १६.

अभ्युपा-कृत– -ते शांश्रौ १३, १२, ११; काश्रौसं ३२ : २२.

अभ्युपाकृत-चमस[c]– -सम् काश्रौ २५,११,२४.

**अभ्युपा** (भि-उप-आ) √**वृत्**, अभ्युपावर्तते बौश्रौ १०, ५९ : २५; २५, ३२ : ३८; †अभ्युपावर्तस्व बौश्रौ १८,३० : २. अभ्युपावर्त्स्यति बौश्रौ १८,२९ : १६.

**अभ्यु**(भि-उ)**पा**(प-आ) √**श्रि**, अभ्युपाश्रयेत् आपध १,२९,१; हिध १,७,५७.

**अभ्यु**(भि-उ)**पे**(प √इ), अभ्युपैति माश्रौ ५, २, १६, २; मागृ; अभ्युपयन्ति द्राग्र २, ५, २१; अभ्युपैमि काश्रौ ४, १५, ५†; अभ्युपेयात् कागृ १, २२; वागृ ६,१२;७,९; १५; वाध; अभ्युपेयुः आश्रौ १२, ६, २८; पागृ २,१४,१९; अप्राय ३,५. अभ्युपेयाय बौश्रौ १८, १३ : ११; ४५ : ८.

अभ्युप-यत्– -यन् बौश्रौ १०, १४:१.

अभ्युपा(प-अ)य– -यः गौध ११, २५.

अभ्युपे(प-इ)त्य आग्निगृ ३, ५,५ : ४; बौध ३, ३, १६; या १४, ३४.†

अभ्युपे(प-ई)यिवस्– -युषाम् ऋप्रा ११,४९.

**अभ्युपो**(भि-उप √उ)**क्ष**, अभ्युपोक्षति कौगृ ५, ५,६.

**अभ्यु**(भि-उ)**पो** (प √उ) **प्** (दाहे), अभ्युपोषेत् बौश्रौ १४,२६ : १८.

**अभ्युपो** (भि-उप √ऊ)**हृ** (प्रापणे)[d], अभ्युपोहति शांश्रौ १७,१०,१४.

**अभ्युप्त**–, अभ्युप्य अभि √वप् द्र.

**अभ्यु**⌊,भ्यू⌋**ष**[e]– (> अभ्यु⌊,भ्यू⌋षीय–, अभ्यु⌊,भ्यू⌋ष्य– पा.) पाग ५, १,४.

**अभ्यू**(भि √ऊ)**र्णु** > अभ्यू(भि-ऊ)र्ण्वा (न>)ना– -ना या ११,४९†.

**अभ्यू**(भि √ऊ)**हृ**[f] (प्रापणे), अभ्यूहति काश्रौ २,४, ३७; २५,१०,१९; माश्रौ १, २, ३, ८; ३०; २,१, ४, ४; ४ २, २१; वाश्रौ १,३, १, २७; २, २३; हिश्रौ १, ६, ५३; १२, ८, १२; आपशु १०, ९; हिशु ३,४८; ४,४४.

१अभ्यू(भि-ऊढ>)ढा– -ढाः बौश्रौ २५,१० : २१.

अभ्यूढ-त(र>)रा– -राः बौश्रौ २५, १०,२१.

अभ्यू(भि-ऊ)ह– -हः बौश्रौ १५, १ : १६; मीसू १०, १, ५६; –हम् बौश्रौ १५, ६ : ५; –हेन बौश्रौ १५,६ : ९.

१अभ्यू(भि-ऊ)ह्य वाश्रौ १, ३, १, २८.

**अभ्यू**(भि √ऊ)**हृ** (वितर्के), अभ्यूहति या १३, १२; अभ्यूहेत् वाश्रौ १,१,३,६.

२अभ्यू(भि-ऊ)ढ– -ढः, –ढम् या १३, १२.

अभ्यू(भि-ऊ)हितव्य– -व्याः या १,३.

२अभ्यू (भि-ऊ)ह्य गौध ११, २६.

अभ्यू (भि-ऊ) ह्य– -ह्यम् कागृउ ४१ : १३; –ह्याः बृदे २,१२२.

**अभ्यृ**(भि √ऋ), अभ्यर्ति बौश्रौ १३, २७ : ११†.

†**अभ्यृ**(भि √ऋ)**प्**, अभ्यर्ष अप ४८,११; निघ ३, २१.

अभ्यानर्षत् या २, ११.

**अभ्ये**(भि आ √इ), †अभि…आयसि कौसू ४६,५५; अप १,३६,७. अभ्यैति आपश्रौ ६,२५,७; १३, ५,९; १८, ४,५; १९,२०,१०;

---

*a*) पामे. पृ २९६ e द्र. । *b*) गस. उप. घञन्तम् । वा. क्रिवि. । c) कस. । *d*) उपसृष्टस्य धा. अभिनिवीडने ⌊बन्धने⌋ वृत्तिः । *e*) अर्थः व्यु. च ? । *f*) उपसृष्टस्य धा. आच्छादने वृत्तिः ।

४०; ६,४,२२; १०,२,६४.

**उप-पर्वन्-** -र्वणाम् शांगृ ६,१, ११;

**उप √पा**(पाने)[a], उपपाययति आपश्रौ २,८,२; २०,१७,१; भाश्रौ २, ७, १६; माश्रौ १, २, ५, २६; ८,३,९; हिश्रौ १,७, ५७; उपपाययन्ति हिश्रौ १४, ३, ५२; उपपाययेत् आपश्रौ ९,१८,११. २०,१७,२; हिश्रौ १४,३,५३.

**उप-पायन-** -नम् मागृ २, ९,११; -नात् वाश्रौ ३,४,४,४.

**उप-पाय्य** आपश्रौ २, ८, २; भाश्रौ २,७,१६; माश्रौ २, २, ४,३१; ३,५,८; वाश्रौ १,३,३,५; हिश्रौ १,७,५७; मागृ २,४,३.

**उप-पाय्यमान-** -नः आपश्रौ ९, १८, ११; २०, १७, २; हिश्रौ १४,३,५३.

**उप-पात-** प्रमृ. उप √पत् द्र.

**उप-पातक-** -कम् गौध २१, ११; -कानि वाध १,२३; शंध ४१४; बौध २,१, ४३; विध ३७, ३४; सुधप ८६ : २; -केभ्यः बौध ३,५,५; -केषु गौध २०, १६[२]; -कैः बौध ४,२,१२.

**उपपातक-युक्त-** -क्ते विध ५,३०.

**उपपातकिन्-** -किनः विध ३७, ३५; ४३, २६; -किनाम् विध ८,२५; ४४,५.

**उप-पाद्-** पा ६,२,१९४.

**उप-पादन-** प्रमृ. उप √पद् द्र.

**उप-पाप-** -पानाम् वाध २५,१.

**उप-पार्श्व-** -र्श्वयोः बौगृ २,८,२८.

**उप √पीड्** > °उप-पीडम् पा ३, ४, ४९.

**उप पीडित-** -तः विध ६,४३.

**†उप √पृच्**, ऋच्, उप(उपपृञ्च) अग्र ९,४[b].

उपऽउप…पृच्यते बौश्रौ ३,९ : ७; †उप…उपपृच्यताम्[b] द्राश्रौ ७,३,४; लाश्रौ ३, ३, ४; †उप-(उपपृच्यताम्)[b] द्राश्रौ ७,३,४[२]; लाश्रौ ३,३,४[२]; निसू १,२:२५; ऋप्रा १६,५१.

**†उप-पर्चन-** -०न अग्र ९,४[c]; -नः या ६, १७; -नम्[c] द्राश्रौ ७, ३,४; लाश्रौ ३, ३, ४; निसू १, २ : २५.

**†उप-पृच्[d]-** -पृक् या ६, १७ϕ.

**उप √पृण्**, उप…पृणध्वम् बौश्रौ १८,२९ : ७†.

**उप-प्र √कॄ** > उप-प्रकीर्य हिपि ७ : ११.

**†उप-प्र √गा**, उपो(प-उ)…प्रागुः बौश्रौ ४,५ : ३, उप(प्रागुः)काश्रौ ६, ३, १७; काठश्रौ ५५; शुअ १, ३७८; उपो (प-उ)प्रागुः) आपश्रौ ७,१२,८; भाश्रौ ७, ९, ११; माश्रौ १,८, ३,३; वाश्रौ १,६, ४, ४; वैश्रौ १०,९ : १६; हिश्रौ ४,३, ४.

**उप-प्र √गृह्**, उपप्रगृह्णन्ति बौश्रौ ६,१५:१;८,४ : २१;१२ : ३४.

**उप-प्रतिहार[e]-** -रम् शांश्रौ १७,१७, १२.

**उप-प्रती** (ति √इ), उप…प्रतीयात् निसू २,४ : २८.

**उप-प्र √या** > उपप्र-यास्यत्- -स्यन् आपश्रौ १९,१९,१; बौश्रौ १३, २ : ५;९:१; हिश्रौ २२,२,२४.

**उप-प्र √युज्**, उपप्रयुङ्क्ते निसू ९, ३ : १२; २८; उपप्रयुञ्जते वाधूश्रौ ३, ७८ : १; ८३ : ३.

**†उप-प्र √वद्**, उपप्रवद या ९, ७[f].

**उप-प्र √वृत्**, उपप्रवर्तयति आपश्रौ १३,१५,९; बौश्रौ; †उपप्रवर्तय आपश्रौ १३,१४,११; १४,१,७; उपप्रवर्तयतात् बौश्रौ ८, १४ : २८[३]; उपप्रवर्तयेत् आपश्रौ १३, १५,१०.

**उपप्र-वर्तन-** -नम् हिश्रौ ९,४,३४.

**उप-प्रे**(प्र √इ), उपप्रैतु या ६, २२; †उपप्रेत आपश्रौ ६, ८, ११; बौश्रौ ३,६ : १४.

**†उपप्र-यत्-** -यन्तः आश्रौ ४,१३, ७; ७,१०,३; शांश्रौ.

**उप-प्रे** (प्र √इ) प् (गतौ), †उपप्रेष्य आश्रौ ३,२,१०; शांश्रौ ५, १६, ९; काश्रौ ६, ५, ९; आपश्रौ ७, १५, ७; बौश्रौ ४, ६ : २८; काठश्रौ ५७; भाश्रौ ७, १२, ९; माश्रौ १,८,३,२५; ५,२,८,२२; वाश्रौ १, ६,४, ३०; वैश्रौ १०, १२ : ८; हिश्रौ ४,३,४५.

**उप-प्रेष्य[g]** > °ष्य-परिपशव्ये-संज्ञ-पय्या(य-अ) न्वग्न-प्रोक्षण्यु-(णी-उ) ल्मुका(क-अ) सि-शामित्रा (त्र-अ) न्तर्धान-प्रच्छेद-स्तोक-संप्रैष-शमित्रनुशासन-संवाद -वनस्पति-स्विष्टकृद्-इडा- -डाः काश्रौ ८,८, २९[g].

**उपप्रे(प्र-इ)ष्यत्-** -ष्यन् आपश्रौ २०, १५,१३[३]†.

**उप-प्रैष[h]-** -षः बृदे १, ३८; ५६; -षम् शांश्रौ ५, १६, ९; -षे

---

*a*) उपसृष्टस्य धा. क्वचित् क्लेदने वृत्तिः। *b*) पामे. वैप १, ९३२ k द्र.। *c*) पामे. वैप१, ९३२ l द्र.। *d*) वैप १ द्र.। *e*) अस. वा. किवि.। *f*) क्रिप. अनुकृतिमात्रं द्र.। *g*) तिङन्तनाम्नोः द्वस.। *h*) = मन्त्र-विशेष-। गस.।

शांश्रौ ५,१६,१०.

उपप्रैषा(ष-आ)श्रावण- -णे बौश्रौ २०,२८ : १२; २४,३६ : ३.

**उप√प्लु**, उपप्लवति कौसू १००,१.

उपप्लावयति हिश्रौ १४,१,३४.

उप-प्लव[a]- -वे द्राश्रौ २, १, २८; लाश्रौ १, ५,२२?[b]; -वौ वाश्रौ ३,२,३,३२; द्राश्रौ २,१,१०; लाश्रौ १,५,७?[b].

उप-प्लाव्य हिश्रौ १४,१,३४.

**उप√बध्, न्ध् >** उप-बद्ध- -द्धान् शौच २,२७†.

उप-बन्ध[c]- -न्धः या १,८; तैप्रा १, ५९; -न्धम् या १,७; ६,१६.

**उप√बलिह्**, उपबलिहामहे लाश्रौ ९,१०,११†[d].

**उप√बाध् >** उप-बाध- -धेऽ-धे भाग २,३१ : १५;१६.

**उपबाहु**[e]- (> औपबाहवि- पा.) पाग ४,१,९६.

**उपबिन्दु**[e]- पाग ४,१,९६[f].

औपबिन्दवि- पा ४, १, ९६; पाग ४,२,१३८[g].

औपबिन्दवीय- पा ४,२,१३८.

**१उप-बिल**[h]- -लम् आपश्रौ १,१६, ५; १५,३,३; भाश्रौ १,१८, ३; ११,२,२६; माश्रौ १,२,१,११.

**२उप-बिल**[i]- -लान् माश्रौ २, ३,४, २३;४,१,५.

**उप√बृह्** (वृद्धौ), उपबर्हस्व आपमं १,११,७†[j].

उपबर्बृहि या ४, २०†.

उप-बर्हण[h]- -णम् आपश्रौ ५, २०, ७; १३,६,१; बौश्रौ १७, ३९ : १; २७; भाश्रौ ५, १२, १६; माश्रौ; -†णे काग्र ४५,७; माग्र २,१,१०.

**उपब्द**[k]- -ब्दैः अप्रा ३,४,१†.

**†उपब्दि**[k]- -ब्दिः शांश्रौ १४,५२,५; अप ४८, १०२; निघ १, ११.

उपब्दि-मत्- -मत् शांश्रौ २, ९, १४[l]; तैप्रा २३,९; -मतः बौश्रौ ७,७ : ९; १४,५ : ३; ५.

**†उप√ब्रू**, उपब्रूते शांश्रौ १२, २४, २; भाश्रौ ४, ७, ३; आपमं; उपब्रुवे आश्रौ २, १०, २१; आपश्रौ ४,५,५[m]; हिश्रौ ६, २, ७[m]; उपब्रवामहै बौग्र २,२, ५; माग्र २,१५,६.

**उप√भज् >** उप-भज्य हिपि ८ : ५; गौपि १,४,७.

**उप-भाव**[n]- -वः पावा ५,३,३१.

**उप√भुज्**, उपभुञ्जते बृदे ८,११५[2]; उपभुज्यताम् आग्निग्र ३,३, २ : २६; ११,२ : १८; गौपि २,४, २२.

उप-भुक्त- -क्तः अप २०, ७,११; -क्तम् आग्र ४,७,२७.

उप-भुज्य काठश्रौ ३; १२.

**†उप√भू**, उप...भुवः या ४,२५ф; उप(भुवः) ऋप्रा ८,१२.

उप...बभूयात?[n] वाग्र १६,१; उप...बभूयाः[o] आपमं १, ११, २; काग्र ३०,३; माग्र १,१४,१६.

**उप√भूष्**, उपभूषतम् आश्रौ ६, ५, २४†.

**उप√भृ=हृ>उप-भृत्**[k]- पावाग ३, ३,१०८[p]; -भृत् काश्रौ १,३,३६; आपश्रौ १, १५,१०; काठश्रौ ७; बौश्रौ; -†०भृत् आपश्रौ २,१३, २;४,७,२; बौश्रौ; -भृतः काश्रौ ३, २,२१××; आपश्रौ; -भृतम् शांश्रौ ४, ९,५;१४,१९; काश्रौ; -भृता आपश्रौ ४,७,२†; भाश्रौ ४,१०,२†; माश्रौ १, ७,२,११; वैश्रौ ६,२ : ६; हिश्रौ २,१,१२; ६,२,१७; वैग्र ५,४:२०; -भृति काश्रौ १, १०, ९××; आपश्रौ; -भृतौ वाश्रौ १, ६, २, ११; वैश्रौ ८,४ : २; हिश्रौ ४,२,२७; ५,१,१२.

औपभृत[q]- -तम् काश्रौ ३, ५,५; आपश्रौ ३, ५, १; ८, ८, १०; १६, १७; १०, ३१,१४; ११, ३, १२; बौश्रौ १, १७ : २५××; भाश्रौ; -तस्य आपश्रौ २,१७,६; बौश्रौ १,१६:३; माश्रौ १, ३, २, ३; वैश्रौ ९, ७ : २; हिश्रौ २, २, ३१; -तान् भाश्रौ २, १६, ९; -तानाम् भाश्रौ ८, २,१०; ११; ७,२; ३; -तानि काश्रौ ६,७,७; आपश्रौ ७, २५, १७; वैश्रौ १०, २० : २; -ते बौश्रौ २०,२६ : २९.

औपभृता( त-आ )ज्य- -ज्यम् वैश्रौ ६,७ : ५.

---

*a*) =नाप. ⌊अग्नि-पक्षयोः⌋ पूर्व-प्रदेश- । *b*) °प्लये इति °प्लयौ इति च पाठौ ? यनि. यथायथं शोधः ⌊तु. चौसं. द्राश्रौ. च⌋ । *c*) गस. उप. कर्मणि प्र. । *d*) पाभे. वैप १, ९४० k द्र. । *e*) व्यप. । व्यु. ? । *f*) °पनि° इति ⌊पक्षे⌋ भाण्डा. । *g*) तु. पागम. । ऐक-, बिन्दवि- इति भाण्डा., (एकविन्दु->) ऐकविन्दवि- इति पासि. । *h*) अस. वा. क्रिवि. । *i*) विप. (ग्रह-)। प्रास. वा बस. वा । *j*) पाभे. वैप १,९२९ g द्र. । *k*) वैप १ द्र. । *l*) सप्र. आपश्रौ ६,११,४ अशब्दं कुर्वन् इति पाभे । *m*) पाभे. वैप १,९५१ b द्र. । *n*) पूप. <ऊर्ध्व- । *o*) परस्परं पाभे. । *p*) तु. पागम. । *q*) विप. । तत्रभवाद्यर्थेषु अण् प्र. ।

औपभृताज्य-शेष-
-षम् वैश्रौ ७,४ : ५.
औपभृता(त-आ)सादन-
-नम् काश्रौ ५,४,२६.
उपभृद्-धर्म- -र्मैः वाश्रौ १,६, २,१२.
उपभृद्-ध्रुव- -वे वाश्रौ १,७, ४,३४.
उपभृद्-वत् आपश्रौ ७, ८, ७; ९, ५.
उपभृन्-मन्त्र- -न्त्रे काठश्रौ ५३.
उप-भृत्य वैश्रौ ७, ८ : ८; १०, २१ : १; हिश्रौ २,५,२.
उपभौवरी[a]- -र्यः चाअ ३९ : ९.
१उपम,मा[b]- पावाग ५, १, १२४; -मम् ऋअ २,८,५३†; -मस्य अप्रा ३,४, १†; -मा आश्रौ ३, २, २०†; सु २२, २; ऋप्रा २, ६८†; -माः आश्रौ ४, ६, ३†; शांश्रौ ५,९,५†; निघ ३, १३†; या ३, ५; १३; -मे निघ २, १६†.
औपमिक[c]- -कः या ३, ४; -कम् या ४, ७; ७, १२; १३; १७.
औपम्य- पावा ५, १, १२४; -म्यात् बृदे १, ३०; -म्ये पा १,४,७९;४, १,६९.
औपम्य-कारण- -णात् बृदे २,९०.
उपम-श्रवस्[d]- -वसम् ऋअ २,१०, ३३; बृदे ७,३६.
उपमश्रवस्-तम[d]- -मम् वागृ ५,२२†.
उपमा-रहित- -ताः आग्निगृ २, ४, १२ : ७.
१उपमा(मा-अ)र्थ- -र्थे बृदे २, ९२; साअ १, १७; या १ ४[3]; ३,१६; ४, ११; ५, २२; २८; ६,८; ७, २०; ८, १९; ९, ६; ११,४७; १२,८; १९; २९; पा ८, २, १०१; -र्थेन या २,१६.
२उपमा(मा-अ)र्थ[e]- -र्थाः बृदे २, ९१; -र्थान् बृदे ४,९७.
उपमो(मा-उ)त्त(म>)मा[f]- -मया या १,१९.
?उपमः[g] आश्रौ २, ५,१७.
उप√मज्ज्, उपमजति बौश्रौ १५, ३७ : २.
उपमङ्क्ष्ये शांश्रौ १६, १६, ३†[h].
उप-मज्जक[i]- -?केन[j] हिश्रौ १८, ४,२३[k].
उप-मज्जन- -ने आपश्रौ २३,१२, ५[k].
उप-मज्जित- -तस्य वाधूश्रौ ३, ९९ : ४.
उप-मज्ज्य आपध २,१५,७.
उप√मथ्,न्थ्, उपमन्थति आपश्रौ ८, १४,१४; काठश्रौ ४०; बौश्रौ ५,११ : २१;२२; १८, ९ : २; ९; १६; २३; भाश्रौ ८, १६, १०; वैश्रौ ९,६ : ४; हिश्रौ ५, ४, ३६.
उप-मथित- -तः हिपि १५ : १६.
उप-मथ्य बौश्रौ १८, १८ : १०; कौसू.
उप-मन्थन- -नम् कौसू ४०,८.
उपमन्थनी[l]- -नीभ्याम् कौसू २७,१०; ४३,२०; ८२,२५.
उप-मध्यमा[m]- -मया आपश्रौ ३, १, २; १९, ७; भाश्रौ ३, २, ९; १७, ८; माश्रौ १, १, ३, १४; ३,३,२; ५, २, १५, १८; वाश्रौ १,१,५,१७; ३,५,१; हिश्रौ २, ३, १; ८, २५; आपगृ ४, ५; भागृ ३,१७: ३; वागृ ११, १६; हिगृ १,१३,८; -मायाम् माश्रौ २,१,४,१.
उप√मन्त्रि( <मन्त्र- ), †उपमन्त्रये शांश्रौ १५, २५, १; उपामन्त्रयन्त तैप्रा ४,४२†.
*उपमन्त्रयां √कृ, उपमन्त्रयांचक्रे बौश्रौ १८, ४६ : १७.
उप-मन्त्रित- -ताः वाधूश्रौ ४,४७ : ११.
उप-मन्त्रिन्[d]- -न्त्रिणः या ९,२†.
उपमन्यु[n]- पाग ४,१,१०४; -न्यवः[o] बौश्रौप्र ४७ : १;६; -न्युः ऋअ २, ९, ९७; साअ २, १५३; -न्यूनाम्[o] आश्रौ १२, १५, २; हिश्रौ २१,३,१४.
औपमन्यव- पा ४, १, १०४; -वः बौश्रौ ३, १४ : ३२; १३, १ : १२;२०, १ : २४;३३××;

a) =ऋच्-विशेष- । व्यु. ? । b) वैप १ निर्दिष्टयोरिह संनिवेशः द्र. । c) तात्रभविकष् ठक् प्र. । d) वैप १ द्र. । e) विप. । बस. । f) विप. । तृस. । g) स्वरूपम् ? । उपवः इति आन. । h) पामे. वैप २, ३खं. उपमंक्ष्यति माश १३, ७, १,१५ टि. द्र. । i) नाप. (सरस्वती-विनशन- [तु. तां २५, १०, १]) । गस. उप. अधिकरणे ण्वुल् प्र. । j) पाठः ? °के इति शोधः (तु. आपश्रौ २३, १२,५) । k) सप्र. °ज्जकेन <> °ज्जने इति पामे. । l) =मन्थन-साधन- । m) =अनामिका- । प्रास. । n) =ऋषि-विशेष- । व्यु. ? । o) बहु. <औपमन्यव- ।

या १,१; २, २; ६; ११; ३,८; ११;१८;१९; ५,७;६,३०; १०, ८; –वम् जैगृ १, १४ : ९; –वस्य बौश्रौ २०, ४ : २१××; –वाः चव्यू २ : ४[a].

औपमन्यवी- > °वी-पुत्र- -त्रः बौश्रौ २०, ३ : १६××; –त्रस्य बौश्रौ २०,१ : १७;२५: २८; २७:३;२१,१४: २२; १५ : १; २६ : १२; २३, १९ : २९.

औपमन्यवीय- -येन बौश्रौ २६, २१ : २.

उपमन्यु-पराशर-कुण्डिन- -नेभ्यः आश्रौ १२, १५,१; हिश्रौ २१, ३,१४.

**उपमर्कट**[b]- > औपमर्कटायन- -नाः बौश्रौप्र २१ : १.

**उप √मा** (माने), उपमास्व ऋप्रा ८, ४५†.

उपमिमीते या १, ४; ३, १३; १४; ५, २६; †उपमिमीहि या १४, ३६ф.

२उप-मा[c]- -मा ऋप्रा १७,१९.

उप-मान- -नम् पा ६, १,२०४; २, ८०; १२७; पावा ३, ३, १५; –नस्य या ७, ३१; पावा ६, १, २००; –नात् पा ३,१,१०,५,४, ९७;१३७; पावा ३,१,७; ४,१, ५५; ५,२, २९; –नानि पा २, १, ५५; –ने पा ३,२,७९; ४, ४५;६,२,७२.

उपमान-समास- -से पावा २, १,५५.

१उप-मित- -तम् पा २,१,५६.

१उपमा- उपम- द्र.

**उप-माति**[d]- -तयः आश्रौ ७,२,१७†.

उपमाति-कृत्[d]- -कृत् शांश्रौ ८, १७,१†.

**उप √मान्**, उप ˙ मीमांसेत वाधूश्रौ ३,१९ : १५; ४,२८[k]: ५;३३ : १०;६९ : ४; ७६ : ६;८० : ४.

?**उपमानय**[e] या १४,३६.

**उप √मि** (प्रक्षेपणे), उपमिनुते आपश्रौ १४,३३,५; हिश्रौ १५, ८,३९; उपमिनुतः वैश्रौ २१,१७ : ११.

†उप-मित्[d]- -मितः भागृ १,२७ : ११; –मिताम् कौसू ६६, २२; २९; अअ ९,३; अपं ४ : ३३.

२उप-मित- -ते वैताश्रौ १०, २२.

**उप √मीव्** (गतौ)[f], उपमीवति बौश्रौ ८, १४:४१; वैश्रौ १६, १८:१५; उपमीवामि बौश्रौ १५,५ : २७.

उप-मीवत्- -वतः बौश्रौ १५, ५ : २८.

**उप-मुख**[g]- -खम् द्राश्रौ ११, २,७; लाश्रौ ४, २,६; –खेन शांश्रौ १७,३,१३.

**उप √मुच्**, ञ्च्, उपमुञ्चते काश्रौ १५,६,२४; आपश्रौ १७, १३, २; बौश्रौ १२, १२ : १४; १७, ४२ : ८; १८, १६ : १२; १९, २ : २; हिश्रौ १२,४,५; आग्निगृ १, ३,५ : १२; भागृ २, २२ : १०; उपमुञ्चेते बौश्रौ १०, ३७ : २; उपमुञ्चतः वैश्रौ १९, ६ : ६७; उपमुञ्चन्ते बौश्रौ १०,२३ : १४;३७ : ९;३९ : ३; ४१ : ३; ४४ : ३; वैश्रौ १८, १४ : ३२.

उप-मुच्य आपश्रौ १८, १७, १२; भागृ २, २२ : ११; कौसू १८, ५;१०; अशां १५,६.

उप-मोचन- -ने बौश्रौ २२,५ : ६.

**उप-मूल**[d,h]- -लम् काश्रौ ४, १,११; आपश्रौ १, ७, ४; माश्रौ १,७, ६,२.

उपमूल-लून- -नम् आपश्रौ ८, १३, १२; काठश्रौ ४१; वाश्रौ १, ७,४,८; वैश्रौ ३, ४ : १६; हिश्रौ ५, ४,११; कौसू १, २२; –नाः गोगृ १, ५, १८; –नान् जैगृ २,१ : ६.

**उप √मृ**, उपमारयति आपश्रौ ८, ८, १२;१३,२०,१०; काठश्रौ १०९; माश्रौ २, २,५,१४; ३, २,१८; ५, ४,२९; वैश्रौ १६, २६ : ४; हिश्रौ ९,५,७.

उप-मारयत्- -यन् आपश्रौ ११, २०,९.

**उप √मृज्**, उपमार्ष्टि शांश्रौ २, ९, १०; काश्रौ ९,४,३४.

उप-मार्जन- -नम् शांश्रौ २, ९,१२.

उप-मृज्य काश्रौ ४, १४,२०; २६, ५,१५. काश्रौसं.

उप-मृष्ट- -ष्टम् कौसू ४६, ४८.

**उप √यच्छ्**, यम् (यमने, ग्रहणे)[i], उपयच्छते शांश्रौ १६, १७, ९; हिश्रौ ४, १,२१; हिगृ १, २४, ४[j]; उपयच्छति आपश्रौ १५, १०,६; बौश्रौ; उपयच्छेते माश्रौ २,४,१,८; उपयच्छतः बौश्रौ ७, १३ : १३; हिश्रौ ८, ७, ८;

*a*) °वः इति पाठः ? यनि. शोधः । *b*) = ऋषि-विशेष- । व्यु. ? । *c*) = छन्दो-विशेष- । *d*) वैप १ द्र. । *e*) पाठः ? °नामय इति शोधः (तु. RN.)। °नाय इति मूको. । *f*) उपसृष्टस्य धा. उपाजने वृत्तिः । *g*) अस. वा. किवि. । *h*) वैतु. रुद्रदत्तः अस. इति । *i*) पा १,३,५६ परामृष्टः द्र. । *j*) उपगच्छति इति Böht ZDMG ५२,८५ ।

उपयच्छन्ते कौसू ८६, १६; उपयच्छन्ति माश्रौ ५, १, ९, ९; वाश्रौ ३, ४, ३, ८; उप…यच्छन्ति बौश्रौ ११, ५:५[2]; ७; १५,३१:३; ५; ६; †उपयच्छामि काश्रौ २६, ५, १५; आपश्रौ; †उपयच्छ काश्रौ १८, ३,१६; उपयच्छेत बौश्रौ २४, ३२:४; ६; आगृ; या ३, ५; उपयच्छेत् वैश्रौ २०, २३:८; आगृ १,५,२; कागृ १४, ८; बौपि ३, १, ५[a]; उपयच्छीत बौश्रौ २०, १०:२३; २५, ११:१२;२४; १४:१६; १५:१४.

उपयमेत् मागृ १,७, १०; वागृ १०,४.

उप-यत- -तम् आपश्रौ ५,१३, ६; -ते हिश्रौ ३,४, २०; ४, ३, ३; ७,८,१९.

उप-यत्य बौश्रौ १, १२:३९××; भाश्रौ १,२५,४.

उप-यन्तृ- -न्ता कागृ २५, २१; मागृ १, १०, १२†; वागृ १४, १३.

उप-यम- पा ३,३, ६३; -मे कागृ १४,१०; मागृ १,७,५.

उप-यमन[b]- -नम् आपश्रौ १५,९, १०××; बौश्रौ; -नात् बौश्रौ ९, १०:२४××; वैश्रौ; -नान् पागृ १,१,४; -ने आपश्रौ १५,११, २××; बौश्रौ; पा १, २, १६; ४, ७७; -नेन आपश्रौ १५, १०,६;११,९; बौश्रौ.

उपयमनी- -नी आपश्रौ १५. ५, १०; भाश्रौ ११, ५, १२; वैश्रौ १३,७:११; हिश्रौ २४, २,५: -नीः काश्रौ ५,४, १८; १८,३,१६†; आपश्रौ; -नीभिः आपश्रौ ७,६,६; वैश्रौ १४,१५:४; -नीम् काश्रौ २६, २, १०; ६,२०; -नीषु काश्रौ ८,६, ३१; बौश्रौ ६,२४:८; १०,५१:६; २५,११:३; -न्या काश्रौ २६,५, १५;६,१; -न्याम् काश्रौ २६, ६, १६; ७, २४; काश्रौसं ३५:२१[c].

उपयमनी-स्थ- -स्थम् काश्रौसं ३५:६.

उपयमनी-हार[d]- -रः बौश्रौ २५,२:४.

उपयमन-द्रव्य- -व्यस्य वैश्रौ १३,१३:७.

उपयमन-प्रतिषेध- -धः या ३, ५.

उपयमन-प्रभृति- -ति पागृ १, ९,१.

उप-यम्य काश्रौ ४,९,८; ५,४, २××; आपश्रौ.

उप-याम[e]- पाग ५,२,१३६; -मः काश्रौ १२,५, १७; आपश्रौ १२, १०,७; माश्रौ ४, २, २; आपमं १,१०,७; †अप ३७, १४, १[2]; २; -मम् बौश्रौ ११, ३:१४; माश्रौ; -माः हिश्रौ ८,२, ४०; -मान् आपश्रौ १८,१, १७[f]; बौश्रौ ११,१:७; माश्रौ ५, २, ४,११; २५; वाश्रौ ३,१,१,१४; -मानि[g] हिश्रौ १३, १, १६[f]; -माय आपश्रौ १७,२,६†; -मे माश्रौ ४,३,१८; ३०; ३२;३३; ५,३;७; -मेन आश्रौ २४, ३, १५; बौश्रौ ११, ३:१८; अप ३७,१५,१; -मेभ्यः वाश्रौ ३,१, १,४; -मेषु माश्रौ ५,२,४,२१; -मैः आपश्रौ १८,२,५; हिश्रौ १३,१,१८.

†उपयाम-गृहीत- -तः काश्रौ ९,६,१××; आपश्रौ.

उपयाम-योनि[h]- -नी काश्रौ १९,२,१५.

उपयाम(म-ऋ)र्च[i]- -मर्चा वैश्रौ १५,१६:१०.

उपयाम-वत्- पा ५,२,१३६.

उपयाम-सादन- -नम् माश्रौ ५, २,४,२०.

उपयामा(म-अ)न्त[j]- -न्तैः वैश्रौ १५,१०:६.

उपयामिन्- पा ५,२,१३६.

उप√यज्, उपयजति काश्रौ ६, ९, १०; आपश्रौ ७, २६,९; १४,७, ११; बौश्रौ; उपयज भाश्रौ ८, ३,१०; हिश्रौ ४, ५, ३७; उपयजेत् बौश्रौ २०,३०:१८;१९; २२,१५:१६; २३, १३:३५; उपयजेरन् पागृ २,१७,१८.

उप-यज्[e]- पा ३, २, ७३; -यजः आपश्रौ १४, ७, ११; काठश्रौ; -यड्भ्यः काश्रौ ६, ७, ८; आपश्रौ.

औपयज[k]- -जः बौश्रौ २४, ३७:७; -जान् काश्रौ ६, ९,

a) उपयच्छेत इति R.। b) भाप., नाप. (पात्र-विशेष-, कुश-विशेष-)। c) °यन्याम् इति पाठः? यनि. शोधः। d) नाप.। उस. उप. अण्णन्तम्। e) वैप १ द्र.। f) सप्र. °मान् <> °मानि इति पाभे.। g) अर्धर्चादिषु द्र.। h) =[ग्रह-ग्रहण-, ग्रहाऽऽसादन-] मन्त्र-विशेष-। द्वस.। i) मलो. कस.। j) विप.। बस.। k) विप.। तस्येदमीयः अण् प्र.।

७†; आपश्रौ ७,२६,८;९; १३, १६,१२†; १४,२,१†; १९,४, ५†; २१, २४, १२; बौश्रौ ४, १० : २; ४;८,१६ : १†;३××; वाश्रौ १, ६, ७, २१†?[a]; –जेषु बौश्रौ २०,३० : १७; २१,२४ : ५; –जैः आश्रौ ४,१२,३.
औपयजिक[b]– -के बौश्रौ ४, ११ : ८.
उप-यज्य[c] आपश्रौ ७,२८,४.
उप-यष्टृ- -†०ष्टः काश्रौ ६,९,७; आपश्रौ; –ष्टा बौश्रौ ४, १० : ५××; वैश्रौ १०, २१ : ७.
उप-याज– -जाः बौश्रौ २४, ३७ : १२.
उपे(प-इ)ज्य हिश्रौ ४,५,४२.
**उप√यत्**, उप···यतते वाधूश्रौ ३, ६९ : १५.
**उप-यत्**– उपे (प√इ) द्र.
**उप-यत**–, °यत्स्य उप√यच्छ् द्र.
**?उपयथा** वाश्रौ ३,२,२, २४.
**उप-यन्तृ**–, °यम– प्रभृ. उप √यच्छ् द्र.
**उप√या**, उपयाति गोगृ ३, ४, ३२; कौसू १७,२६; बौध २, ३, ६२; उपयान्ति अप्राय ३,९; अप ५१, ३, ३; ४, २; ४; ५; विध ४४, ४५; †उपयामि आपश्रौ १४, १७, १; हिश्रौ १५, ५, १; आग्निगृ २,३,५ : १७; उपयाहि आश्रौ ८,१०,१; बौश्रौ २८,२ : ४४; बौगृ १,३,३; †या ४,५,५, १५; †उप(याहि) आश्रौ ७,१२, १५; ८,८,२; शांश्रौ १०,८, ९; ११,९,३; साअ १,१५०;१५१; उनिसू ४ : १८; उप···यातम् अप्राय ६,९†; †उपयात आश्रौ ५, ५,१४; शांश्रौ ८,२,३; उप-(यात) आश्रौ ८,८, ८; ऋअ २, ४, ३५; ३७; उप···अयुः शांश्रौ ८,२०,१†; उपयायात् आगृ २, ६,११.
†उपो[प+उ](अयासिषुः) क्षुसू १,१ :२; २, ४ : ६; साअ १, ४८७;२, ६८५.
उप-यात– पाग ४,४,१९[d]; –ताय गोगृ ३,४,३३.
औपयातिक– पा ४, ४,१९.
उपयात-चन्द्रसूर्य[e]– -र्येः अप ५१,५,४.
उप-याय कागृ २७,३.
**उप-याम**– प्रभृ. उप√यच्छ् द्र.
**उप√युज्**[f], उपयुङ्क्ते आपध १, ५,७; हिध १,२, ७; उपयुञ्जीत बौगृ ३, ३, १९; वाध; उप-युञ्ज्यात् विध ३,८८.
उपयुज्यते कप्र २,८,६;१०,१०.
उपयोजयन्ति बौध २, १, ५०;
उपयोजयीत मागृ १, ३, ६;
उपयोजयेत् अप ३,१,४; आपध.
उप-युक्त– -क्तस्य अप ३, १, ७; –क्ताः द्राश्रौ २,२,४; लाश्रौ १, ६, ३; –क्तानाम् भाश्रौ ९,१६, ८; –क्तानि आश्रौ ३, १, १९; अप ३, १, ४; –क्तेषु वैध ३, २, ४.
उप-युञ्जान– -नः माश्रौ ४, ८, २; आग्निगृ १,२,१ : २४; २,४,४ : ७; अप ३१, ७, २; वाध २७, १५; बौध ३,७,१०; गौध २३, २६.
उप-योग– -गः अप ३, १, ७; मीसू १०,२,४६; –गम् हिश्रौ १४,३, ५; कौसू २, २५; –गे भागृ ३, १२ : ४; आपध २,३,१३; हिध २,१,४४; पा १,४,२९.
उपयोग-निमित्त– -त्तम् पावा १,४,५१.
उपयोग-प्रभृति– -तीनि हिश्रौ १०,२,६९.
उपयोग-वचना(न-आ)नर्थक्य– -क्यम् पावा १,४,२९.
उपयोग-व्रत– -तम् हिश्रौ १०, ७, १.
उपयोगिन्– -गिनः शैशि २५४.
**उपर,रा**[g]– -रः अप ४८,१०१†; निघ १, १०; या २, २१²ϕ; –रम् आपश्रौ ७, ३, १××; बौश्रौ; –†रस्य आपश्रौ १४, २९,३[h]; हिश्रौ १५ ७,१६[h]; या ३, ५²; –†राः अप ४८,९९; निघ १०, ६; या २, २२; –राणि आपश्रौ १४,६, ११; हिश्रौ ९, ८, २८; –रात् आपश्रौ ७, १०, ३; १९, १६, १५; वाधूश्रौ ४, ६३ : ५; वैश्रौ १४,१० : ७; –रे आपश्रौ १२, ७, १०××; वैश्रौ; –रेण बौश्रौ ४, ४ : २८; वाधूश्रौ ४,६३ : ४; वैश्रौ १०, २ : ६; हिश्रौ ४,१, २८; जैश्रौ ६ : ६; –रेषु बौश्रौ १७,१२ : ६.
उपर-मात्र– -त्रम् हिश्रौ ४,२,३९.
उपर-वर्जम् काश्रौ ६,१,२६.
उपर-संमित,ता– -तम् काश्रौ ६,२, ९; बौश्रौ; –ताम् आपश्रौ १४,

*a*) °जाक्षा° इति पाठः? यनि. च अक्षारान् इति च शोधः। *b*) विप.। तस्येदमीयष् ठक् प्र.। *c*) वैप १ द्र.। *d*) तु. [पक्षे] पागम.। *e*) विप.। बस.। *f*) पा १, ३,६४ परामृष्टः द्र.। *g*) वैप १, ९३७ k द्र.। *h*) पाभे. वैप १ परि. उपरः शौ ६,४९,२ टि. द्र.।

६,१०; बौश्रौ १७,१२ : ५;२६, २३ : ८; हिश्रौ ९, ८, १६; –तायाम् बौश्रौ २४, ३५ : ४.

उपरै(र-ए)कदेश- -शे वैश्रौ १५, ११ : ७.

उप √रञ्ज्, उपरज्यते अप ५७,१-४, ३; उपरज्यति अप ५३,५,४.

उप-रक्त- -क्तः वैश्रौ २०, २४ : १; अप ५३,३,२.

उप-राग- -गे वैश्रौ २१,३ : ३.

उप √रम्[a], उपरमति शांश्रौ १८,१९, १०; बौश्रौ; उपरमन्ते या २, २१; उपरमन्ति शांश्रौ १७, १७,७; बौश्रौ; उपरम बौश्रौ ७, १४ : १७†; †उप···रम शांश्रौ १७,११,३; बौश्रौ ७,१६ : ३५; २० : २; ८, ८ : २५; उप··· रमध्वम् या २, २५†; उपरमेत् आश्रौ ४, १०, ३; ५, १, १३; शांश्रौ; उपरमेयुः द्राश्रौ ३,४,१०. उपरमयति या २,१८.

उप-रंस्यत्- -स्यते तैप्रा १६,२२†.

उप-रत,ता- -ताः या २,२१; –ते शांश्रौ १२, १३, ३; वैश्रौ १५, २७ : २१; १८, २ : ७; कौगृ; –तेषु आगृ ४,६,७.

उपरत-शोणि(त>)ता[b]- -ता गोगृ २,५,८.

उप-रम[c]- -मम् कौगृ ३,९,१; शांगृ ४,७,१; –मे वैध २,१२,१.

उप-रम्य कौगृ ३,८,४; शांगृ ४,६, ९;८,२०.

उप-रव- उप √रु द्र.

उप-राज[d]- ( >औपराजिक, का, की- पा.) पाग ४,२,११६.

उप √राध् > उप-राधय[e]- ( >औप-राधय्य- पा.) पाग ५,१,१२४.

उप √रि, उपरिेत् वाधूश्रौ ३, १९ : २३.

उपरि[f] शांश्रौ ६, १२, १२××; काश्रौ; आपमं २,८,११†?[g]; आग्निगृ १, ३,५:९?†[g]; भागृ २,२२:७?†[g]; हिगृ १, ११, ५?†[g]; कौसू ५१, १४?†[h]; पा ५, ३, ३१; ८, २, १०२; उपरिऽउपरि काश्रौ ८, ९, ९××; आपश्रौ; पा ८,१,७.

उपरि-जनन- -नम् कागृ ३०, ६; वागृ १६,३.

उपरि-जानु[i]- -नु कागृ ४, ९; बौगृ २, ५, ७२; ३, ३, १६; आपध १, २४, ११; २८, ११; २,१८,५; हिध १, ६, ६०; ७, ४७; २,५,५७.

उपरि-तर- -रम् भाश्रौ १, २५, १३.

उपरि-द(शा>)श[b]- -शम् द्राश्रौ ५,२,९; लाश्रौ २,६,४.

उपरि-नाभि[i]- -भि काश्रौ ७, ३,१; १६,३,८; ५,१;१६; वाश्रौ २, १,३,८; वैश्रौ १२,७ : ११?[j].

उपरि-पाका(क-अ)र्थ[k]- -स्व- -स्वात् मीसू १०,१,५६.

उपरि-भाव- -वम् गा १,३.

उपरि-मेख(ला>)ल[l]- ( > औप-रिमेखलि- पा. ) पाग २, ४, ६३.

उपरि-वासस्[m]- -सः मीसू १२, ३,२.

उपरि-शयन[i]- -नम् अअ ९,६†.

उपरि-शय्या[m]- -य्या कागृ ६०,९; –य्याम् आपश्रौ †१०, १३,६; २२, ३, १६; बौगृ १, ५, २७; आपध २, ६, १५; हिध २, २, १६.

उपरि-शरण- -णे वागृ १७,१३.

उपरि-शिरस्[n]- -रः कौसू ८६, १२.

†उपरि-षद्[i]- -षदः बौश्रौ १२,४ : ६; शुप्रा ३,८३; भागृ २,६ :८.

उपरि-ष्टा( < स्ता )त्[i] आश्रौ १, ११,४ ××; शांश्रौ; आपश्रौ २०, १३,१२[o]; या १,४;१५;२०; २, ६;१३;२३;२४;२७;४,१०;१५; १६;५,३;६,४;९;७, ९;२०; पा ५,३,३१; उपरिष्टात्ऽउपरिष्टात् आश्रौ ११,४,१.

उपरिष्टाज्-जप- -पः द्राश्रौ ५, ३,१९; लाश्रौ २, ७,१८; –पम् द्राश्रौ ५, ४, १४; लाश्रौ २, ८, १४.

उपरिष्टाज्-जाग(त>)ता[b]- -ता अअ ४, ११.

उपरिष्टाज्-ज्योतिष्मती[b]- -ती अअ ६,१४०.

उपरिष्टाज्-ज्योतिस्[p]- -तिः ऋसू[q] २,१२ : १५; २०; निसू १,२ : १६; २, ११ : ३३; शुअ २, १३६; अअ ४,२; १०,१०[?]; ११,९; पिं ३,५४.

---

*a*) पा १,३,८४ परामृष्टः द्र. । *b*) विप. । बस. । *c*) उप. भावे अप् प्र. उसं. (पा ३,३,६३) । *d*) =ग्राम-विशेष- । व्यु. ? । *e*) पृ २५५ k द्र. । *f*) वैप १ द्र. । *g*) शोधः वैप १ परि शौ ४,९,९ टि. द्र. । *h*) परि इति पाठः ? यनि. शोधः (तु. संस्कर्तुः टि., शंपा. ⌊भू. शौ ५,१०⌋ च) । *i*) अस. वा. किवि. । *j*) °णाभि इति पाठः ? यनि. शोधः । *k*) मलो. कस.>बस. । *l*) व्यप. । बस. । *m*) मलो. कस. । *n*) अस. । उप-शि° इति MW. ? । *o*) °ष्टाद् इति पाठः ? यनि. शोधः । *p*) =छन्दो-विशेष- । *q*) =षडह-विशेष- ।

औपरिष्टाज्ज्यौतिष[a]- -षम् ऋअ २,८,३५.
उपरिष्टाज्ज्योतिर्-जगती- -त्यः अअ १०,१०.
उपरिष्टात्-काल[b]- -लः आपश्रौ १५,४,१३; ५,५; ६,१२; भाश्रौ ११, ४,१४; ५,५; ६,९; हिश्रौ २४,१,२२.
उपरिष्टात्-त्रिकद्रुक[b]- -केण आपश्रौ २२,२२,६; हिश्रौ १७, ८,१४.
उपरिष्टात्-पृष्ठ्य[b]- -ष्ठ्याः आपश्रौ २३,९,१३; हिश्रौ १८, ३,१६.
उपरिष्टात्-स्वाहाकृति[c]- -तयः बौश्रौ २४,३६:१०; -तिम् बौश्रौ ४,७ : १६.
उपरिष्टाद्-अतिरात्र[b]- -त्रः हिश्रौ १८,१,३; -त्रम् काश्रौ २४, ४, ३७; -त्राः शांश्रौ १६, ३०, १२; आपश्रौ २२, १८,१; हिश्रौ १७,६,१.
उपरिष्टाद्-अलङ्कार[b]- -राः आपश्रौ ६, ३,२; हिश्रौ ३, ७, १२.
उपरिष्टाद्-आसेचन-वत्- -वत् आपश्रौ १२, २, १४; -वन्तम् आपश्रौ १५, २, १४; -वन्ति आपश्रौ १२,१,४.
उपरिष्टाद्-उपया(म>)मा[b]- -मया आपश्रौ १२, १५, ३; -माः हिश्रौ ८,४,१२.
उपरिष्टाद्-ग्री(वा>)व[b]- -वम् वाश्रौ १,२,४,४०.
उपरिष्टाद्-द(शा>)श[b]- -शम् हिश्रौ ७,२,३९; निसू १, ११ : १९.
उपरिष्टाद्-दैक्ष- -क्षम् गोगृ ४, ५,१३.
उपरिष्टाद्-दैवी-बृहती[d]- -ती अअ ३,२९.
उपरिष्टाद्-बार्ह(त>)ता[b]- -ता अअ ९,५; -ताः अअ ९,५.
उपरिष्टाद्-बृहती- -ती निसू १, २ : २३; ऋअ १, ७, ४; शुअ २, ४४; ५५××; अअ; -त्यः अअ ८,८;१०,१०; -त्यौ अअ २,५:१८,३;२०,५४.
उपरिष्टाद्बृहती-बृहती- -त्यौ ऋअ २,८,४६.
उपरिष्टाद्-भाग[b]- -गानि अप १, ५,५; ६.
उपरिष्टाद्-भूरिग्-बृहती- -ती अअ ३,२२; ८,७.
उपरिष्टाद्-विराड्-बृहती- -ती अअ १,१८; २, १४; २६; ३१; ३३;३, २१; ८, १०(२); ९,१; १०, ११; १२, २; -त्यः अअ १०,१०.
उपरिष्टान्-नाभि[b]- -भि माश्रौ ६,१,१,२५.
उपरिष्टान्-निचृद्-बृहती- -ती अअ ८,७.
उपरिष्टान्-निर्बाध[b]- -धम् आपश्रौ १६, २२, ३; माश्रौ ६, १, ४, २; ७, २; वाश्रौ २, १, ३,१.
उपरिष्टान्-महा-बृहती- -ती अअ २,३.
उपरिष्टान्-मास[e]- -सम् बौश्रौ १७,२५ : १.
उपरिष्टाल्-लक्ष(ण>)णा[b]- -णा आश्रौ २, १४, २०; शांश्रौ १,१७,१७.
उपरिष्टाल्-लक्ष्मन्[c]- -क्ष्मा आपश्रौ १९,१८,९; २४,१३,८; बौश्रौ २६, ४ : १४; हिश्रौ २२, २,५; -क्ष्माणम् आपश्रौ १६, २४,१२; हिश्रौ ११, ७,४०.
उपरिष्टाल्-लोमन्[b]- -म हिश्रौ ७, ६,३४.
उपरि-स्थ- -स्थम् पा ६,२,१८८.
उपरि-स्पृश्[c]- -स्पृशम् हिश्रौ २१, १,२†.
उपर्य(रि-अ)भाव-वचन- -नम् पावा १,४,११०[2].
उपर्य(रि-अ)र्ध,र्धा- -र्धा बौश्रौ ७, १३ : १; २; -र्धाम् बौश्रौ ३, १० : ८; ७,१३ : २; -र्धे बौश्रौ ७,६ : ८; ७ : २३; ८, २ : ४; वैश्रौ १५,२७ : १०.
उपर्या(रि-आ)दि- -दिषु पावा २,३, २.
उपरि-बभ्रव[f]- -वः कौसू ८०, ५४, अअ ६,३१; ७,८; ७५.
?उपरिप्र- -प्रानाम् चाअ ३८ : ९.
?उपरि(प्र>)प्रा-क(र्ण>)र्णी[g]- -र्णी ऋत ५,१,३.
उपरीति[h]- -तिः बौश्रौ १७,१८ : ४.
उप√रु> उप-रव[c]- -वाः हिश्रौ ७,६, १; बौशु ४:११; -वाणाम् बौश्रौ ६,१० : १९××; भाश्रौ; लाश्रौ १०, १५, १७?[i]; -वान् शांश्रौ १३, २९,६; काश्रौ; -वे शांश्रौ १३, १२, ९; काश्रौ; -वेभ्यः बौश्रौ २३, १२ : २१; -वेषु

a) विप.। तस्येदमीये अणि प्र. उभयपदवृद्धिः उसं. (पा ७,३,२०)। b) विप.। बस.। c) वैप १ द्र.। d) विप.। बस.>कस.। e) नाप.। बस.। f) =ऋषि-विशेष-।व्यु.?। g) विप.। बस. पूप.?। h) =सर्प-विशेष-। व्यु.?। i) °वानाम् इति पाठः? यनि. शोधः।

आपश्रौ ११,१३,४; काठश्रौ.

औपरव[a]– -वम् शुअ १, ३२७; –वस्य हिश्रौ ७, ६, ३९; –वाणाम् माश्रौ २, २, ३, ४; –वाणि शुअ १, ३२९; –वेण हिश्रौ ७,६,३०.

उपरव-कर्मन्– -र्म आपश्रौ ११,१०,१९; वैश्रौ १४,७ : २; १२ : ३; हिश्रौ ७,७,२६.

उपरव-काल– -लात् बौश्रौ २१,१४ : १; २२, ५ : १; –ले बौश्रौ ९, १४ : ५; २१, ११ : १८.

उपरव-देश– -शः वैश्रौ १४, ४ : ९; –शम् वैश्रौ १३, १६ : ५; –शात् काश्रौ ८, ३, १३; माश्रौ २, २,१, ५३; –शे काश्रौ ७,६,१; आपश्रौ १०, २०,१३; वैश्रौ १२, १५ : १; वैताश्रौ १३,७.

उपरव-न्यन्त– -न्ते आपश्रौ ११,११,८†.

उपरव-पांसु– -सुभिः आपश्रौ ११,१३,७; ८; –सूनाम् बौश्रौ २१,१५ : ११.

उपरव-बिल– -ले हिश्रौ ७,६, १०; ११.

उपरव-मन्त्र– -न्त्रः मीसू ११, ४, ५३; –न्त्रान् आपश्रौ ११, ११,७.

उपरव-स्थान– -नेषु काश्रौ २४, ५,२९.

‡उपरिष्यते जैश्रौका ५३.

उप √रुध्, †उपो(प+उ)रुरुधे शांश्रौ ६,५,६; ऋअ २,७,७७.

उप √रुध्, उपरुन्धन्ति आपश्रौ २०, १३,६; २१, ८, ३; वाश्रौ ३,४, ३,५; हिश्रौ १४, ३, १२; १६, ३, ३९; वाध २८, १७; उपरुन्ध्यात् आपध १, ८, २५; २, ९, ११; बौध ४, १, १२; हिध १,२,११३;२,१,१२६.

उपरुध्यते वाधूश्रौ ४,११४ : ५.

उपरोधयेत् नाशि २,८,९.

उप-रुद्ध– -द्धाः बौध २,५,९; –द्धे अप्राय ५, २.

उप-रोध– -धः शंध २६१; मीसू ८, ४, १५; –धम् हिध २,१, १२७[b]; –धेन नाशि २,८,९.

उप-रोधिन्– पाग ३,१,१३४.

उप(प √ ऋ)र्ष् (हिंसायाम्), उपर्षन्ति शौच ३,४७†[c].

उपल,ला[d]– पाउभो २, ३,९७; पाग ४, ३, ७६; –लः माश्रौ २, ३, १,२१†; अप ४८,१०१†; निघ १,१०; या २,२१[२]; –लम् अप ७१, १३, ५; –लाम् काश्रौ २, ४,१५;५,५; आपश्रौ; –लायाम् आपश्रौ १, २०, ३; बौश्रौ २४, २५ : १९†; भाश्रौ १, २१,१०; माश्रौ १,३,५, १३†; वाश्रौ १, ३, ७, १४†; वैश्रौ ४, ७ : ३; हिश्रौ १, ५, ५६; –ले माश्रौ २, ३, ३, ४; –लेन वैगृ २,१३ : ८; अप्राय ५,६; –लेषु बौपि ३,४,२२; या ६,५.

औपल, ला[e]– पा ४, ३, ७६; –लम् शुअ १, ६८; –लाम् आग्निगृ २,५,३ : २२; बौगृ ३, ७,१७.

†उपल-प्रक्षि(न् >)णी[f]– -णी अप ४८, ११५; निघ ४, ३; या ६, ५.

उपल-प्रक्षेपि(न् >)णी– -णी या ६,५.

उपल-मणि– -णीनाम् वाध ३, ५०; बौध १,५,३८.

उपल-मणि-शङ्ख-शुक्ति– -क्तीनाम् गौध १, ३२.

उपल-राजी– -जीम् भाश्रौ ७, ६, ११; हिश्रौ ७,८,५.

उपल-रुधिर-पांसु-वर्ष– -र्षेषु वाध १३,३५.

उपल-वर्षम् अप ७२,३,४.

उप √लक्ष्, उपलक्ष्यते शांश्रौ १, १६,९; माश्रौ ५,१,७,१५;१०, २५;२,३,२१; अप ५८[२], १,६; बृदे ८, ७९; उपलक्ष्यन्ते अप ५८[२],४,१६; ६५,१,८.

उपलक्षयति आपश्रौ २४,३,२१; भाश्रौ ९,१५, ३; हिश्रौ २१,२, २७; ६३; उपलक्षयेत बौश्रौ २६, ३३:२४;२५; उपलक्षयेत आपश्रौ १, २, ७××; भाश्रौ; माशि ४,३[g].

उपलक्षयीत माश्रौ १, ५,५, ३.

उप-लक्षण– -णम् मीसू ३,२,२९; १०,४,४९[२]; ५७; ११,४, २८; २९.

उपलक्षण-त्व– -त्वात् मीसू १०, ४,४९.

उप-लक्षित– -तम् शुअ ४, १९२;

---

*a*) विप. । सा ऽस्यदेवतीयस् तस्येदमीयश्च अण् प्र. । *b*) पृ १८० e टि. अनुपरोधम्···न ⌊इति मूलतः पाठस्य सतः⌋ <> उपरोधम् इत्याकारकः शोधः द्र. । *c*) पाभे. वैप १, ९२४ g द्र. । *d*) =मेघ- ⌊या. निघ. प्रमृ.⌋। शिष्टं वैप १ द्र. । *e*) विप. । साऽस्यदेवतीयः अण् प्र. । *f*) वैप १ द्र. । *g*) °क्षयेत् इति पाठः ? यनि. शोधः ।

–ताः बौश्रौ १७,११ : १२;२९, ८ : २१; शुअ ४,१९३.

उप-लक्ष्य आश्रौ १,१२,३१; हिश्रौ २१,२,३६;४९.

उप-लक्ष्य– -क्ष्यः बृदे १,४५.

उप-लक्ष्मी– -क्ष्म्यै मागृ २,१३,६†.

उप√लभ्, उपालभत बृदे ३, १३४; ४, ५२; उपलभेत आपध २,२१,१६; हिध २,५,१२५.

उपलभ्यते निसू ३, ११ : १४; अप्राय; उपलभ्यन्ते आपध १, १६, १२; २, २४, १३, हिध; उपलभ्येत नाशि १,६,१७.

उप-लब्ध,ब्धा– -ब्धाः वाध २०, ४५; –ब्धे भागृ ३,१३ : १४.

उप-लब्धि– -ब्धिः आपशु ३,१२; बौशु १ : ३८; हिशु १, ५१; तैप्रा २३, ८; १५; पाशि १,२, ४५; ३, ६७; ३, १,७; -ब्धेः पावा १,३,९;–ब्धौ माशि १,३.

उप-लभ्य काश्रौ २५, ९, २; ऋअ २,८,१.

उप-लम्भ– -म्भम् हिश्रौ १५, ८, ३०.

उप-लम्भन– -ने पावा १,३,२१.

उप-लम्भ्य- पा ७,१,६६.

?उपलाश– -शे मागृ २,१५,६.

उप√लिख्, उपलिखति आपश्रौ ७, ३,१४; उपलिखेत् आपशु ४,७; हिशु २,६.

उप-लेख[a]– -खम् उसू ८,३६[2].

उप√लिप्,म्पू,उपलिम्पति वैगृ५,५: २७; गोगृ ३,७,४; उपलिम्पन्ति आपश्रौ १,६,११; भाश्रौ १,६, १४; उपलिम्पेत् द्राग्र ३,२,१.

उपलेपयेत् कौगृ १, १५, १; शांगृ १,२३,१; अप ३६,२५,१.

उप-लिप्त- -प्ते शांगृ १,५, ३[b]; ५, १, ७; पागृ; –प्तेषु विध ८५, ६२.

उपलिप्त-केश-श्मश्रु[c]– -श्रुः आपध १,८,२; हिध १,२,९०.

उप-लिप्य शांश्रौ १८, २४, २७; काश्रौ; कौगृ १,१,६[b].

उप-लेपन– -नम् आग्निगृ २,४,७ : ४; शंध १६६; ३३५; ३४७; बौध १,५,४६; ६,१६; –नात् वाध ३,५७; बौध १,६,२०.

उपलेपना(न-आ)दि– -दि वैश्रौ ३,५ : ३.

उप√लुभ्, उपलोभयन्ति पागृ १, १२,४.

उप-लेट-, उप-लोट– पा ६,२,१९४.

उप-व(<अव)√क्षि, उपवक्षयेत् अप्राय ५,३.

उप√वच् > उप-वक्तृ- -०क्तः आश्रौ ५,७,३; ५; शांश्रौ ७, ६, ३;६; -क्ता आश्रौ ८, १३, ९; शांश्रौ १०, १४,४; १५,४; १६, ४; १८,४; वैगृ ५, ४ : ३;६; १०;१३.

†उप-वाच्य[d]– -च्यः माश्रौ २, ५, ४, २४; हिश्रौ १५, ७, १३; वैताश्रौ १६,१५.

उपो(प-उ)क्त– >°क्त-व(त् >) ती– -ती आश्रौ २,१४,१९.

उप-वत्– -वत् निसू ३,३ : १४.

उपवती– -ती द्राश्रौ ८, १, २०; लाश्रौ ४, ५, १९; निसू ३, २ : २८; ३ : ८; १२; १५; २४; ४, ११ : १६; ५,८ : १४; १९; ८, २ : ३; ६ : १; –तीम् निसू ५, ८ : १२; ७, १० : १५; ८,७ : ३३; –त्याः शुअ १,१८०.

?उपवत्तौ निसू ५,६ : १२.

उप-वत्स– उप√वस् (निवासा°) द्र.

?उपवत्स्वशन[e]– -नम् माश्रौ १,४, १,५; ५,१,१२[f]; ५, १,५,५७; –ने माश्रौ १,१,१,११.

उप√वद्, उपवदन्ति निसू २, १ : ३९; उपवदेत् बौश्रौ १८,२६ : २१[2]; अप्राय २,९[1].

उप···वदिष्यन्ति बौश्रौ १८, २६ : ९; उपावादीत बौश्रौ १८, २६ : १८; उपवादिष्ट बौश्रौ १५,८ : २; उपावादिष्म बौश्रौ १८,२६ : १७.

उपवादयन्ति मागृ १, ९, २९.

उप-वदित[g]– -तान् निसू ४,९:२५.

उप-वाद– -दः मीसू १०, ८, ९; –दात् निसू २,१ : ३८; –दान् वाश्रौ १,१,१,३.

उप-वादिन्– -दिनः बौश्रौ १८, २६ : ९.

उपो(प-उ)द्य आश्रौ ८, ४, १; लाश्रौ १०,७,४.

†उप√वध्, उपावधीत् शांश्रौ १२, २४,२[h]; उपावधीः आपश्रौ १०, २,११[c]; हिश्रौ १०,१,१५[e].

उप-वन– -नेषु विध ८५,६१.

उप√वप्, उपवपति आपश्रौ १,२०, ९××; बौश्रौ; उपवपतः भाश्रौ

---

*a*) = ग्रन्थ-विशेष- । *b*) सपा. °लिप्ते <> °लिप्य इति पाभे. । *c*) विप. । बस.>द्वस. । *d*) वैप १ द्र. । *e*) पाठः ?। = उपवत्स्यद्-भक्त- । उपवत्स्य(त्>)द्-अशन- इति, [पक्षे] उपवत्सु– (<सम्नन्ताद् उप√वस [तु. घक्षु.]) + अशन- [षस.] इति च संस्कर्तुरभिमतः शोधः । *f*) पाभे. पृ ४२० a द्र. । *g*) संप्रसारणाऽभावः उसं. । *h*) धा. प्रवेशने वृत्तिः ।

८,७,९; वैश्रौ ८,११ : ४; हिश्रौ ५, २, ४१; उपवपन्ते आपश्रौ १३,१२,९; उपवपन्ति आपश्रौ २०,१६, १९××; माश्रौ; उपवपेत् आपश्रौ ८,८,१३; बौश्रौ; द्राश्रौ १३,२,१०; लाश्रौ ५, ३, २†![a].

उप-वपत्– -पन् हिश्रौ १६,१,३९.

उप-वपन– -नात् भाश्रौ ८,१,८.

उप-वाप्य बौश्रौ २१, २ : ९; १०; २८.

उपो(प-उ)स– -सः आपश्रौ २३, १२, १५; हिश्रौ १८, ४, २९; लाश्रौ १०, १५, १६†; –सम् हिश्रौ ४,५,५६.

उपो(प-उ)प्य आपश्रौ ९, १९,१३; बौश्रौ २१, १५ : १२; भाश्रौ १२,५,१०; वैश्रौ २०,२८ : ८.

उपो(प-उ)प्यमान– -नम् वाश्रौ १, ६,७,३६.

उप√वर्ण्, उपवर्णयति निसू ३,१० : १७.

उप√वल्ह्, उपवल्हामसि[b] आश्रौ १०, ९, २!; शांश्रौ १६, ६, ३; याशि २,१५

उप√वस् (निवासानशनयोः)[c], उपवसति आपश्रौ १, १४, १६; २०, १, १४; बौश्रौ; उपवसतः कौसू ६७, १७; १४०, ४; अप १९, १,३; उपवसन्ति आपश्रौ २१, २४, ३; बौश्रौ; †उप... वसन्ति बौश्रौ २, ११ : १८; २०, ४ : ४०; †उपवसामि आपश्रौ ४, ३, ६; भाश्रौ ४, ५, ४; हिश्रौ ६, १, ३९; †उपवसन्तु आपश्रौ ४, ३, ६; भाश्रौ ४,५,४; हिश्रौ ६, १,३९; †उपवसस्व कौगृ २, ७, २१; शांगृ २, १२,६; उपावसन् वाधूश्रौ ४,२६ : ३६; उपवसेत् काश्रौ २,१,१; आपश्रौ.

उपवासयति आपश्रौ ११, १७, ५; वैश्रौ १४, १५ : ११; उपवासयेत् कागृ ४५,३; अप १, १०,२.

उप-वत्स[d]– > औपवत्स[e]– -त्सम् वाश्रौ १,४,१,५[f].

उप-वत्स्यत्– -स्यन् आपश्रौ ४, ३, ११; वाश्रौ १,४,१,५; –स्यन्तौ आपश्रौ ४,२,४.

उपवत्स्यद्-भक्त[g]– -क्तम् वैताश्रौ १,११; ६, १२; कौसू १, ३१; ८,१.

उप-वसत्– -सतः बौश्रौ २०, १ : ५;८; –सन् भाश्रौ ४, ४, ७; हिश्रौ ६, १, ३८; बौध ४, २, १५.

उप-वसथ[h]– पाउ ३, ११६; –थः शांश्रौ १३, १९,४; आपश्रौ २१, ४, १८; बौश्रौ २,८ :१;११ : १८ǂ; ३, १२ : १; १२; २६; ६,१० : १××; –थम् बौश्रौ ३, १३ : ६; १८, २६ : १०; २०, १ : १; ६; १५; –थस्य बौश्रौ १, १ : ७; –थात् आपश्रौ १, १३, १२[२]; २०, ८, १६; बौश्रौ १२,२० : ९××; –थे शांश्रौ ५, ११, १५; १५,१; काश्रौ.

औपवसथ[e]– -थात् वैश्रौ ३, ८ : ५; हिश्रौ १, ३,५१; हिपि २१ : ९.

औपवसथिक, का[i]– -कम् आश्रौ १२, ४,१०; बौश्रौ २५, ३२ : ३४; गोगृ १, ५, २७; ६, १; ३; ४; द्रागृ २, १, ४; ५; –का बौश्रौ २५, २७ : ७; ११; १९;२४;३०;२८ : ७;१३; १९; –कायै बौश्रौ २४,१७ : ८.

औपवसथ्य[j]– -थ्यात् काश्रौ ८, २,६; २०,३,९; बौश्रौ १८, २३ : ८;१२; १७; –थ्ये आश्रौ ४,१,२६;८,१७; काश्रौ १८, ३, ३; आपश्रौ २१, १४, ११; वैश्रौ ९, १ : २; हिश्रौ ३, ५, २०; २८; ५, १,२; १६, २,३; वैताश्रौ १५, ५; २९, १४; हिपि २१ : ९; अप्राय २,९.

उपवसथ-कर्मन्– -र्म लाश्रौ १०, ११,२; ४;६;९;१२.

उपवसथ-ग(वी>)वि-प्रभृति[k]– -ति बौश्रौ २४, १५ : ६.

उपवसथ-प्रभृति– -ति काश्रौ १२,१,२५;२,७.

उपवसथ-स्थान– -नानि बौश्रौ २४,२१ : ४.

उपवसथा(थ-आ)दि– -दि हिपि २१ : १०.

उपवसथा(थ-अ)न्त– -न्तम् लाश्रौ ८,४,६;१२.

---

*a*) उपोपेत् इति पाठः? यनि. शोधः (तु. द्राश्रौ.)। *b*) पामे., BI प्रभृ. शोधश्च वैप १, ९४० k [तु. आन. प्रभृ.] च द्र.। *c*) पा१,४,४८ परामृष्टः द्र.। *d*) =उप-वस्त–, उपवास–। उप. भावे सः प्र. (पाउ ३,६२)। *e*) विप.। तस्येदमीयः अण् प्र.। *f*) पामे. पृ ४२० a,७०६ f च द्र.। *g*) =उपवासात् पूर्वभोजन-।-षस.। *h*) =उपवास-दिवस-, गृह- प्रभृ.। वैप १ प्रभृ. द्र.। *i*) विप.। तस्येदमीयष् ठक् प्र. उसं. *j*) विप.। तस्येदमीयः यञ् प्र. उसं. (पावा ४,१,८५)। *k*) सस.>बस. पूप. =कर्म-विशेष-[तु. बौश्रौ २,८]।

उपवसथीय[a]– -ये बौश्रौ ३, १५ : १; ५,१ : ७; १०, १६ : १९; १९ : ३; १२, २० : २१; १५, ११ : ११; १६, २४ : ३; १७, ११ : ९; १८, ४१ : ७; २३, २ : २२; ३ : २२; २४, २० : ४; २१ : ६; २६, २ : १८; वैश्रौ १८,९ : ९.

उपवसथ्य[b]– -थ्ये द्राश्रौ १, १, २२; ५, १, ३३; लाश्रौ १, १, २०; २,५,२८.

उपवसथ्य-प्रभृति– -ति द्राश्रौ ७,३,१०; लाश्रौ ३, ३,१२.

उप-वसन– -नात् बृदे १, २५; २८; ३२; –ने शुप्रा ३, १४.

उप-वसि(त>)ता– -ताम् वागृ १३,१.

उप-वस्त[c]– > औपवस्त[d]– -स्तम् आपध २,१,५; हिध २,१,५.

उप-वस्तवै आपश्रौ ११, २१,८.

उप-वस्तव्य– -व्याः गोगृ १, ५, ५.

उप-वस्तृ– पावा ५, १,१०५.

औपवस्त्र– पावा ५, १, १०५; –स्त्रम् कागृ ४६,२[e].

उप-वास[f]– पाग २, ४, ३१; ४, ४, १०३; ५, १, ९७; १०१; –सः आगृ १, १०, २; कौगृ; आपध १, ८, २९[g]; –सम् वैगृ २,३ : ७ ××; अप; –सात् वाध १०,५; –सेन कप्र ३,८,६; शंध ३३९; –सैः आज्यो १४, ८; ९; –सौ बौध ४,५,१७.

औपवास– पा ५,१,९७.

औपवासिक– पा ४, ४, १०३; ५,१,१०१.

उपवास-त्रय– -यम् वाध २७, १६.

उपवास-न्याय– -येन वाध २२, ११.

उपवास-व्रत– -तम् विध २५, १६.

उपवासा (स-अ) न्तरित– -तः विध ४६,२२.

उपवासिन्– -सी बौध २, ७, २६; काध २७० : ४.

उप-वास्य पागृ १, १४, ३; कागृ ५३,२.

उपो(प-उ)षित,ता– -तः जैगृ १, १७ : ८; अप; –तम् विध ९, ३३;२५,१५; –ताभ्याम् आपगृ ७,१७; –ताय गोगृ ३, २, २९; द्रागृ २, ५, २९; –तायाः आगृ १,१३,२.

उपो(प-ऊ)षिवस्– -षुषि पावा ६, १,३७.

उपो(प-उ)ष्य शांश्रौ १, ३, १; ४, १७,३; काठश्रौ.

उपो(प-उ)ष्यमा(ण>)णा– -णाम् वैताश्रौ २४,१५.

उप-वसथ– प्रभृ. उप √वस् (निवासा°) द्र.

?उपवसिताः[h] आगृ १,१४,७.

उपवस्ति[i]– (> औपवस्तिक– पा.) पाग ४,४,१२.

उप √वह्, उपवहति कौसू ६८, २३[?].

उपो(प-ऊ)ढ– -ढम् वैगृ १, १२ : ४†.

उप-व(<अव) √हा(गतौ) >उपव-हाय आपश्रौ २२,१३, २[j].

उप √वा, उपवायात् काश्रौ २५, १२, ११; १३.

उपवाजयते वैश्रौ ८,११ : १०; उपवाजयति काश्रौ २६, ४, २; आपश्रौ १५, ८, ६; बौश्रौ १, १५ : ६; ११; १९ : ५; ४, ६ : २; ५,३ : २; १३ : ३; ६,१८ : २३; २० : २१; ११, ४ : २; १५,२८ : २; भाश्रौ २,१२, ३; ११,८, १०; माश्रौ १,३, १, ४; वाश्रौ १,३,४,२; हिश्रौ २,१,५; वैताश्रौ २, १३; उपवाजयतः बौश्रौ ५, ७ : २.

उप-वाजन[k]– -नम् आग्निगृ ३, ५, ७ : १८[l]; बौपि १,६ : १३; –नैः काश्रौ २१,३,७.

औपवाजन[m]– -नैः काश्रौ १२,३,९.

उप-वाजयत्– -यन्तः काश्रौ २१, ३, ७.

उप-वाजयमान– -नाः द्राश्रौ ९, १, ३[२]; लाश्रौ ३,५,३[२].

उप-वाज्य काश्रौ ३,१,१२; आपश्रौ.

उप-वाज्यमान– -नाः द्राश्रौ ९, १, ३; लाश्रौ ३,५, ३.

---

*a*) छः > ईयः प्र. उसं. (पा ४, ३, १३१)। *b*) = उपवसथीय-। यत् प्र. उसं. (पा ४,३, १२१)। *c*) = उपवास-। उप. भावे क्तः प्र.। *d*) स्वार्थे अण् प्र.। *e*) = व्रत्याऽऽहार-। *f*) = उप-वस्त-। *g*) पाभे. पृ २९३ e द्र.। *h*) पाठः? उपा(प[.कप्र.],अ)वसिताः इति शोधः (तु. परि. अव-सिता पागृ १, १५, ८ टि.)। *i*) अर्थः व्यु. च?। उपस्ति– इति पाका.। *j*) पाभे. पृ ६९३ e द्र.। *k*) = व्यजन-। करणे कृत्.। *l*) °वाजि° इति पाठः? यनि. शोधः (तु. बौपि.)। *m*) तस्येदमीयः अण् प्र.। °जनकैः इति कासं.।

**उप-वाक,का**[a]-> °क-व(<ब)दर-चूर्ण- -र्णानि काश्रौ १९,२,२०.

**उपवाक,का-सक्तु-** -क्तुभिः आपश्रौ १९,७,१; माश्रौ ५,२,११,१६; वाश्रौ ३,२,७, ६३; हिश्रौ २३, १, २५; –क्तून् आपश्रौ १९, ६, ७; हिश्रौ २३,१,१६.

**उप-वाच्य-** उप√वच् द्र.

**उप-वाजन-** प्रभृ. उप√वा द्र.

**उप-वात-** उप√वै द्र.

**उप√वाति** (<वात- L <√वै J), **उपवातयते** आग्निगृ ३,८,२:१५; **उपवातयति** बौश्रौ ९,३ : २४; १०,६:१; वैश्रौ १३,४ : ८;१८, १ : ७७; आग्निगृ ३, ८, २ : ५४; ३ : २६; बौपि १, १५ : २५;५९; १६ : १३; **उपवातयन्ते** बौपि १,३ : १७;२४;३१.

**उप-वातयत्-** -यन्तः आग्निगृ ३, ५,४ : ७; १४,२२.

**उप-वाप्य** उप√वप् द्र.

**उप-वास-** प्रभृ. उप√वस् (निवासार्थे°) द्र.

**?उपविकृन्त**[b]- -न्तेन आपश्रौ १७, २६,१७.

**उप-वि√कृ**, **उपविकिरति** बौपि १, १५ : ४५[c].

**उप-वि√गुल्फ्**, **उपविगुल्फयेयुः** आश्रौ १२,८,३३.

**उप√विद्** (लाभे), **उपविन्देत्** बौगृ ४,९,१२.

**उप-वेत्तृ-** -त्तुः आग्निगृ २, ६, ६ : २८; बौगृ १,२,४४.

**उप√विश्**, **उपविशति** आश्रौ ४, ११, ३; शांश्रौ; उपो(प-उ)**पविशति** आपश्रौ १०, ८, १; **उपविशत** शांश्रौ ५, १९,१; काश्रौ; **उपविशन्ति** आश्रौ ५,२,७;शांश्रौ;**उपो-(प-उ)पविशन्ति** आपश्रौ २०,६, १०; **उपविशेत्** आश्रौ १, ३, ३१××; शांश्रौ; **उपविशेताम्** द्राश्रौ १३,२,१; लाश्रौ ५,२,५; **उपविशेयुः** द्राश्रौ ३,१, १५; ३,२७; ४,३,११; लाश्रौ १, ९, १७; ११,१८;२, ३,१०. **उपविवेश** वाधूश्रौ ३, ८८ : ७; बृदे ५, २२; **उपाविक्षत्** वाधूश्रौ ३,२० : ४; हिगृ १, १७, ५[2]†; **उपावेक्षीत्** भागृ २,३२ : १; २. **उपवेशयति** काश्रौ १४, ५, १८××; बौश्रौ; **उपवेशयन्ति** गोगृ २,३, ४: ४,६; कौसू ८१, २१; **उपवेशयेत्** बौश्रौ २१, ८ : ३१××; द्राश्रौ.

**उप-विशत्-** -शतः काश्रौ ४,७,१९.

**उप-विश्य** आश्रौ १, ३, २२××; शांश्रौ; अप्राय १,३[d];उपो(प-उ)-**प-विश्य** शांश्रौ ५,९,४;८,५,३; ९,२; गोगृ ३,४,२८.

**उप-विष्ट,ष्टा-** -ष्टः काश्रौ १८, ५, ११; वैश्रौ १५, १८ : ४; जैश्रौ २६ : ६; अ1 ५,४,५; ३३,६, १०; ३८, १, ३; –ष्टम् आश्रौ १, १२, ११; द्राश्रौ २, ४, ९; लाश्रौ १, ८, ७; –ष्टयोः काश्रौ ९,५,१; –ष्टस्य द्रागृ २, ३, ७; –ष्टा अप १, ४४, ७; –ष्टाः वैताश्रौ १९, २३; –ष्टान् पागृ ३, १०, २२; आग्निगृ २,३,३ : ११; –ष्टाभ्याम् काश्रौ १०, २, २६; –ष्टान् काश्रौ २, ७, १; १०,७,३; काठश्रौ १५५; –ष्टाय काश्रौ १०,२,२०; १४, ४,१५; १५, ५, २२; लाश्रौ ९,२,१०; पागृ २, ३, ३; –ष्टायाः पागृ १, १५,४; कौसू ७६,२६; अप ३५, १,३; –ष्टायाम् आगृ १, ८, ९; १४,३; –ष्टे आश्रौ ५,७, १०; शांश्रौ १३, २, ५; काश्रौ ९,१२, १८; १९, ६, २६; माश्रौ ५,१, ८,११; द्राश्रौ ३,३,२७; लाश्रौ १, ११, १८, वैताश्रौ १६, ७; –ष्टेभ्यः पागृ २,१०,१८; –ष्टेषु आश्रौ ४, ७, २; आपश्रौ १८, १८,१०; २०,६,११; विध ५, १४५; –ष्टौ काश्रौ १५,६,४.

**उपविष्ट-होम**[e]- -माः काश्रौ १, २,७; –मेषु काश्रौ ३, ७,४.

**उप-वेश**[f]- पागृ ४, ४, १२[g]; –शः बौश्रौ १४,४:२३†; –शम् वाश्रौ १, २,२,५; –†शाय शांश्रौ १३, ५,४; काश्रौ २५,१४,१५; आपश्रौ १४, १९,१; २६,२[1]; बौश्रौ१४,४:१७;१८[2]××;माश्रौ.

**औपवेशि,षि,सि/क-** पा ४,४, १२.

**उप-वेशन-** -नः आश्रौ ५, १२,४[h]; –नम् आश्रौ १,१२, १०; शांश्रौ ४,६,६;१४; द्राश्रौ ४,४,९;१५, १,१७; ३,१६; लाश्रौ २, ४,५; ५, ९,१५; ११,१७; कप्र ३,२, १; –नस्य जैश्रौ १० : १०; १३ : ३०; –नात् बौश्रौ २९, १३ : ९; द्राश्रौ १५, २, १९; लाश्रौ ५, १०,१९; –ने बौश्रौ

*a*) वैप १,९४० p द्र. । *b*) अर्थः व्यु. च ?। =तर्कु- इति C. । *c*) सपा. तैआ ६,७,१ परिकिरति इति पाभे. । *d*) पूर्वेण संधिरार्षः । *e*) वि॰. । बस. । *f*) वैप १,९४१ b द्र. । *g*) अर्थः ?। °वेश–,°वेस– इति पाका. । *h*) =मन्त्र-विशेष- ।

२०,५ : ११; १४; २१, १८ : ७; ९; २२,१ : ८; शांगृ ५, ५, १; आपगृ २३,९.
उपवेशन-प्रक्षालना( न-आ )-चमन[a]- -नम् कौसू ६५,१०.
उपवेशना(न-आ)दि- -दि आश्रौ १,१२,२८.
उप-वेशित- -तः वैताश्रौ ११, ११; -ताः शंध २०५.
उप-वेशिन्- -शिनम् आज्यो १२, ६.
उप-वेश्य बौश्रौ १,४:१३××; माश्रौ.
†उप√विष्, उपविड्डि आपश्रौ ३, १३,६; भाश्रौ ३,१२, ९; हिश्रौ २,६,३२.
उपवेविष्ठि काश्रौ ४,२,१२.
उप-वेष[b,c]- -†०षः आपश्रौ ३, १३,६; भाश्रौ ३,१२,९; हिश्रौ २,६,३२;-षः काश्रौ४,२,१२†; आपश्रौ १,६, ७†; भाश्रौ १,६, १०†; वैश्रौ ३,५ : ८†; हिश्रौ १, ३,२†; कप्र २, ८, ३; शुअ १,६२; मीसू ६, ४,४८; -षम् काश्रौ २, ४, २५××; आपश्रौ; -षस्य बौश्रौ २०, २४ : ४५†; -षाय बौश्रौ १, ३ : २; वैश्रौ ३, ५ : ९; -†षे आपश्रौ ३, १४,१; भाश्रौ ३,१२,१०; वैश्रौ ७,१२ : १२; हिश्रौ २,६, ३३; -षेण शांश्रौ २,८, ८; काश्रौ २, ५,२५; बौश्रौ १,३: ९;१२,४ : ७; २०,४ : ८; २४ : ४९;२२, १७ : १; मीसू ४,२,८.

उपवेष-करण- -णे बौश्रौ २०, ३ : ३१.
उपवेष-वत् मीसू १०, ८, ६६; ११,३,३६.
उपवेषो(ष-उ)द्‌सन- -नम् आपश्रौ १२,२५,१३; हिश्रौ ४, ४,७१.
उप-वेषण- -णम् आग्निगृ २,३, १ : १५.
उप√वी (गतौ)>†उप-वी[b]- -वीः आपश्रौ ७,१२,५; बौश्रौ ४,५ : ३; भाश्रौ ७,९,९; वैश्रौ १०,९: १६; हिश्रौ ४,३,३.
?उपवीक्षाय[d]- -येण आपश्रौ १७, २६,१७.
उप√वीज्, उपवीजयति माश्रौ ४, २,२५; उपवीजयन्ति आग्निगृ ३, ४, २ : १५; १०, १ : १२; बौपि[e] ३,४,२; ५, २; वैगृ ५, ५:५.
उप-वीजयत्- -यन्तः बौपि ३, २, ३[e].
उप-वीत- प्रभृ., उप√व्ये द्र.
†उप-वीर[f]- -रः आपमं २, १३, ९; पागृ १,१६, २३; आग्निगृ २,१, ३ : १३; कागृ ३५,१![g]; भागृ १, २३ : ३; हिगृ २, ३, ७; -राय जैगृ १,८ : १४.
उप√वृत्, उपवर्तध्वम् वैश्रौ १५, २९ : १३†; उपावर्तत वाधूश्रौ ४, ४७ : ९; उपवर्तेत आश्रौ १०,८,३; बृदे ६,१४५.
उपवर्तयन्ति बौश्रौ १५,१९ :८;

†उपवर्तये आपश्रौ ८, ४, २; बौश्रौ ५,४ : २९;९: ३०;१७ : १८;१८ : २४; हिश्रौ ५,१,४५;
उपवर्तयतु मागृ २, १३, ६[२]†;
उपवर्तय माश्रौ १,७,२,२३†.
उप-वृत्य बौश्रौ २१,१२ : १८.
उप-वेत्तृ- उप√विद् (लाभे) द्र.
उप-वेद[h]- -दः चव्यू ४ : १०[२]; -दाः गौध ११,२१; चव्यू ४ : ९.
उप-वेश- प्रभृ. उप√विश् द्र.
उप√वेष्ट् > उप-वेष्टित- > °तिन्[i]- -ती आपध १, ८, २; हिध १,२,९०![j].
उप-वेष्ट्य हिश्रौ २२,६,६.
उप√वै>उप-वा(त> )ता- -ताम् आगृ ३, ८, ४; -तायाम् वाश्रौ १, ३, १,११; वैश्रौ ४, ९ : ९; हिश्रौ १, ६,२२; -तासु बौश्रौ १०,६ :२; -ते शांश्रौ १३,१२, ८;-तेषु बौश्रौ ९,३:२४; भाश्रौ ५,४,१३; वैश्रौ १३,४ : ८.
उप-व्या(वि-आ) √ख्या > उपव्याख्यात- -तम् या २,१२.
उप-व्या(वि-आ)√वृत्, उपव्यावर्तेत भागृ ३,१७ : २.
उप-व्या(वि-आ)√हृ>उपव्याहरण- -णम् बौश्रौ २,१ : १.
उपव्या-हृत्य बौश्रौ २,६ : ४.
उप-व्युष[k]- -षम् आपश्रौ ५,८,५;१५, १८,१३; २२, २५, २०; बौश्रौ १४, ३० : ९†; २०,१ : १५; भाश्रौ ५, ४, ४; ११, १९, ३; माश्रौ १,५, २,७; वाश्रौ १, ४,

a) समाहारे द्वस. । b) वैप १ द्र. । c) अत्र देवतात्वेनाप्युपचर्यते (तु. शुअ. प्रमृ.) । d) अर्थः व्यु. च?। e) °वा° इति R. । f) =बालग्रह-विशेष- । व्यु. ? । g) अपवीतः इति पाठः? यनि. शोधः (तु. आपमं. प्रमृ.) । h) =आयुर्वेद-, धनुर्वेद- प्रमृ. । प्रास. । i) इनिः प्र. उसं. (पा ५, २, ८८) । j) अपवेष्टिनी इति पाठः? यनि. शोधः ( तु. आपध. ) । k) अस. समासान्तष् टच् प्र. उसं. (पा ५,४,१०७) । उप. =व्युष्- ।

१,१७; वैश्रौ १,७ : १५; हिश्रौ ३,३,२; २३,४, १४; लाश्रौ ९, ८,९; काग़ृ ४,५,°४; आपध १, ९,२२; हिध १,३,२३.

उप-व्यु(वि-उ)षस्[a]- -षसि आग्निगृ २,४,५ :२; ७,५ : १०.

उप-व्यु(वि-उ)षस[b]- -सम् काश्रौ २१,३,१३.

उप-व्यू(वि√ऊ)ह् (प्रापणे), उपव्यूहति हिश्रौ २४,६,२.

उप√व्ये, †उपव्ययामि[c] कौगृ २, १, ३१; आग्निगृ २, ४, ९ : २४; वागृ ५,८.

उप-वीत[d]- -तम् कौगृ २,८, ६†; शांगृ २,१३,६†; आग्निगृ २,६, ६ : २७†; वागृ ५,८†; वैगृ १, ५ : ११; २,५ : १४; कप्र १,१, २;३; अप ७०,५,१; शंध १९७; विध २७,२९; ७१,१५; वैध २, ७, ७; -तानि विध २७, १९; वैध २, २, २; ७, ७; -ते कौगृ २, ८, ५; -†तेन कौगृ २,१, ३१[२]; शांगृ २,२,३; आग्निगृ २, ४,९ : २४: वागृ ५,८.

उपवीता(त-अ)जिन-मेखला(ला-अ)हतवस्त्र-दण्ड-शरावा (व-अ) श्म-समिद्-दर्भा (र्भ-आ)दि-संभार[e]- -रान् वैगृ २,५ : २.

उपवीता(त-आ)दि- -दीनि वैगृ २,९ : ६;११ : २.

उपवीता(त-अ)र्थ- -र्थे आपध २,४,२२; हिध २,१,७५.

उपवीतिन्- -तिनः शांश्रौ १६, १,१६; काश्रौ १,७,२३; -तिनम् कप्र ३,२,४; -तिना कप्र १, १, ४; २,८,१२; -तिनाम् वाधूश्रौ ३, ७९ : ७; -ती आपश्रौ १, ७, ७; ८, ३; हिश्रौ २,७, १४; आग्निगृ १,६,२ : ५; वैगृ १,५ : ८; ११; २,२ : १२; ५, ६ : १; कप्र २,२,३.

उपवीति-त्व- -त्वात् आगृ ४,७,१३.

उप-वीय वैश्रौ ९,४ : १५;५ : १०; आगृ ४,८,१४†.

उप√व्रति (<व्रत-), उपव्रतयेरन् आश्रौ १२,८,३९.

†उप√शक्, उपशिक्ष क्षुसू १, २ : १०; ४ : ३१; ९ : २; २, ५ : १९; उप(शिक्ष) साअ २,१११; उपशिक्षेयुः आपश्रौ १४, १५, १†; हिश्रौ १०, ७,१७; †उपशिक्षेम आपश्रौ १६,३४,४; वैश्रौ १२,२१:३४; हिश्रौ ११,८,१५.

उप-शिक्ष्य आपश्रौ २०, १३, ८; हिश्रौ १४,३,१२?[f].

उप-शात[g]- -तानि बौश्रौ २३,३ : १४.

उप-शाद[h]- -दस्य आश्रौ ९,८,२२.

औपशद[i]- -दः काश्रौ २२,१०, १३; -दे लाश्रौ ९,४,३; -देन बौश्रौ १८,४५ : ३४; ३५; ३९.

उप√शम्, उपशाम्यति कौसू ७३, ४†; अप ३७,१०, १; ११, १; १३, १; उपशाम्यति अप्राय २, ५; उपशाम्येत् आगृ १, ९, ३; अप्राय १,५; २,५[२].

उपशामयेत् कप्र २,९,१६.

उप-शम- -मः या १४,१०; -मम् अप ३५,१,१२.

उप-शमय्य काश्रौ ४, ८, १३; १२, १,२५; २५,३,९.

उप-शान्त- -न्ते कागृ ४६, ३; कप्र ३,१,३.

उप-शाम्यत्- -म्यन् या ४,१४.

उप-शाम्यमान- -नः अप्राय २,५[२].

उप-शाय-, °यिन्- उप√शी द्र.

उप-शा(ला>)ल- पावाग ४,३,५८; -ले कौसू ६९, २.

औपशाल- पावा ४,३,५८.

उप√शी, उपशेते बौश्रौ ४, ४ : ११××; वैश्रौ; उपशेरते शांश्रौ १४,२२, १०; १२, बौश्रौ १७, १२ : ३; भागृ २, १९ : १३: †उपशेषे आग्निगृ ३, ५,६:१६, वौपि १, ५ : ४; †उपशेष्व>ष्वा आपश्रौ १७,५, १६[२]; वैश्रौ १८,२१ : १५; १८; हिश्रौ ११, ८,१०[२]?[j]; आग्निगृ २,१,१: १६; भागृ १,२२ : १८; २,२१ : ६; हिगृ २,२,७?[k]; उपशयीत कागृ ४६,२; कौसू ४६,१६.

उप-श[l]-> °शो(श-उ)क्त[m]- -क्तानि निसू ३,१३ : २९.

उप-शय,या[n]- -यः वाधूश्रौ ३, ७६ : ८; हिश्रौ १४, २, ४०; १६,२,३; -यम् शांश्रौ ६,९,८; आपश्रौ १४, ५, ८; ६, १२†; बौश्रौ १५, १४ : ४; २३ : ३; १७, १३ : १४; २६, २४ : ३;

*a*) असं. > प्रास. । *b*) समासान्तष् टच् प्र. इति a टि. विशेषः । *c*) पाभे. पृ ६९२ h द्र. । *d*) = यज्ञोपवीत- । *e*) द्वस. > बस. > कस. । *f*) °क्षे(क्ष्ये) इति पाठः ? यनि. शोधः (तु. आपश्रौ.) । *g*) विप. । बस. (पा २,२,२५) । *h*) = एकाह-विशेष- । व्यु. ? । *i*) स्वार्थे अण् प्र. । *j*) उपवेशेषु इति पाठः ? यनि. शोधः (तु. काठ ३९,९ आपश्रौ. च) । *k*) उपवेश्य इति पाठः ? यनि. शोधः (तु. आपश्रौ. प्रभृ.) । *l*) = औपश- (तु. वैप २,३ खं.) । *m*) विप. (<उपश-शब्देनोक्त- ?) शङ्ग-) । *n*) वैप १ द्र. ।

माश्रौ ५,२,१२,२; ११; वाश्रौ ३,२,६,२; २२; हिश्रौ ९,८,२९; ३०; -यस्य बौश्रौ २३,१४:४; ७; -यान् बौश्रौ १५,१५:११; -याम् काश्रौ १६,४,७; १७,५,४; २६,१,२२;७,१६; -याय माश्रौ ५,२,१२,१८; वाश्रौ ३,२,६,३६; -ये आपश्रौ १४,७,१; २१,१४,१२; बौश्रौ १५,२३:१७; १७,१४:११; वाश्रौ ३,२,५,५७; हिश्रौ ९,८,३५; -यौ बौश्रौ ९,५:२५; १५:१; वाधूश्रौ ३,८२:१; वैश्रौ १३,८:९; हिश्रौ २४,२,१०.

औपशय[a]- -यः वाधूश्रौ ३,७६:२५; -यम् बौश्रौ ७,१८:३; १९:४; २०:११; ८,८:३०; ९:१३; २५,१३:१६[2]; -ये बौश्रौ ७,१२:१९; ३६; ४९.

उपशय-द्वादश[b]- -शान् बौश्रौ १७,११:२.

उपशय-पालीवत- -तौ हिश्रौ ९,८,४.

उप-शाय- पा ३,३,३९.

उप-शायिन्- -यी काश्रौ ४,१०,१६.

उप-शीव(र>)री[c]- -†री आपश्रौ १७,५,१६[2]; माश्रौ ६,२,३,४[2]; वाश्रौ २,२,२,१०; वैश्रौ १८,२१:१५; १८; हिश्रौ ११,८,१०[2]; -रीः आपश्रौ १७,५,१६; वैश्रौ १८,२१:१९; हिश्रौ ११,८,१०.

उपशीवर्यु(री-उ)पधान- -नम् वैश्रौ १९,५:२६.

उप√शीय्, उपशीयते बौश्रौ १८,४५:३८; उपशीयन्ते बौश्रौ १८,४५:४२; ४५.

उप-शुन- पा ५,४,७७.

उप√शुभ्, उपशोभयेत् अप १०,१,११; २४,१,७.

?उपशुरसृपेशुक्कोसतमूनमोदनः अप १,३४,२.

उप√शुष्, उपशुष्यति बौश्रौ १४,५:५०.

उपशोषयेत् आपध २,१०,१६; हिध २,४,१६.

उप-शुष्क- -कः आपश्रौ ९,२०,७; वैश्रौ २०,३९:८.

उप√शृ,श्रु, उप···श्रवत् शांश्रौ ८,२५,१†; †उपश्रुत आश्रौ ८,३,१०; शांश्रौ १२,१४,१; वैताश्रौ ३२,१९.

उपशृण्वन्ति बौश्रौ २४,२५:१९; †उप···शृणवत् आपश्रौ ५,१७,४; हिश्रौ ३,४,४८; †उप(शृणवन्तु) शुअ ३,२३९; साअ २,९४५; उपो(प+उ)··· शृणुहि>ही आश्रौ ६,२,४; शांश्रौ ३,१७,२; द्राश्रौ १३,२,७; लाश्रौ ५,२,१०; †उपो (शृणुहि>ही) ऋअ २,१,८२; उपाशृणोः आपश्रौ ५,२,४†; उपशृणुयात् माश्रौ २,३,२,१४; वैश्रौ १५,६:४; हिश्रौ ८,१,६२; उपशृणुयुः आपश्रौ ९,११,१७[d]; १२,५,५.

उपशुश्राव वाधूश्रौ ३,९४:८.

उप-शृण्वत्- -ण्वतः गौध १२,४; -†ण्वते आश्रौ ५,१५,२३; शांश्रौ ८,१७,३१[e]; आपश्रौ २०,१,१७[f]; बौश्रौ १५,३:८[f].

†उप-श्रुति- -तिः पागृ १,१६,२३; आग्निगृ २,१,३:१४; हिगृ २,३,७; जैगृ १,८:१६; -ती[g] आश्रौ १,९,१; शांश्रौ १,१४,३; -त्या वैताश्रौ ८,७.

उप-श्रुत्य आपश्रौ ९,१२,९; बौश्रौ २४,७:१०-१२.

†उप-श्रोतृ- -ता[h] आपश्रौ ४,९,६; माश्रौ ४,१२,१; हिश्रौ ६,३,२; आग्निगृ ३,१,२:१७; २,३:६; आपध २,६,२; बौध २,८,१२; हिध २,२,२; -तारम् वैताश्रौ १८,१२; -त्रे[i] शांश्रौ १,४,५; आपश्रौ २४,११,२; बौश्रौ ३,२१:१२; वैताश्रौ १८,१२.

उप√श्रम्, उपश्राम्यति कौसू ४१,२; ४८,२०; उपश्राम्येत कौसू १३९,१३.

उप√श्रि, उपश्रयति काश्रौ २६,६,१२; उपश्रये जैश्रौ १७:१६†; †उप···श्रयन्ताम् आग्निगृ ३,८,२:३६; बौपि १,१५:४३.

उप-श्रित- -तानि काश्रौ २६,६,१८.

उपश्रित-प्रहरण- -णम् काश्रौ २६,६,२१.

उप√श्लिष्, उपश्लिष्येत बौश्रौ १८,४६:११.

उप√श्वस्, उपश्वासयति बौश्रौ १५,

*a*) स्वार्थे अण् प्र. । *b*) विप. । बस. । *c*) वैप १ द्र. । *d*) सप्र. काठ १०,६ अनुपस्रष्टः पाठ इति । *e*) अपश्रु° इति पाठः? यनि. शोधः (तु. आश्रौ. BC. च)। *f*) पामे. वैप १,९४२ g द्र. । *g*) पामे. वैप १,९४२ i द्र. । *h*) पामे. पृ१९८ p, ९९० h द्र. ।

२४ : ९; †उपश्वासय बौश्रौ १५, २४ : ९; वैताश्रौ ३४, ११; आगृ ३, १२, १७; कौसू १६,१; अप १७, २, ११; अग्र ६, १२६; या ९, १३; उप (श्वासय) बृदे ५.११२†.

उप-श्वस[a]- -से कौसू ६१,२९†.

उप-ष्टुत्- उप√स्तु द्र.

†उपस्[b]- -पसः अप ४८, ११६; -पसि बौश्रौ ९, ७ : ४; अप ४८,११५; निघ ४, ३; या ६, ६ॐ.

उप-सं√यम् > उपसं-यम्य माश्रौ १,१,२,१०××.

उप-सं√युज् > उपसं-योग- -गः पावा ४,२,२१.

उप-सं√वद् > उपसं-वाद- > °दा (द-आ)शङ्का- -ङ्कयोः पा३,४,८.

उप-सं√विश्, उपसंविशति काश्रौ २०, ६, १४; हिश्रौ १४, ४,६; भागृ १,२० : १२; उपसंविशेत् शंध ३८५.

उपसंवेशयति आग्निगृ ३,५,६ : १२; बौगृ १, ६, २४; बौपि १, ४ : २८; कौसू ८०,४४.

उपसं-विश्य आपश्रौ २०,१७, १७; बौश्रौ १५, २९ : ३२; ३० : ६.

उपसं-वेशन- -नम् आग्निगृ ३, ७, ३ : २०; बौगृ १, ५, २२; ७, ११××; बौपि.

उपसं-वेश्य कौगृ ५,३,६.

उप-सं√व्ये, †उपसंव्ययस्व[c] आपमं २,२,७; आग्निगृ १,१, २ : ३२; ५, १ : २४; काठगृ ४१, ७; बौगृ २, ५, १२; भागृ १, ५ : १८; १३ : ८; हिगृ १,४,२.

उप-सं√शंस्, उपसंशंसति शाश्रौ १७,८,२.

उपसं-शस्य आश्रौ ८, ८, १; १२, २०; १०,१०,४××.

उप-सं√श्रि, उपसंश्रयध्वम् बौश्रौ ११,१० : ३†.

उप-सं√श्रु > उपसं-श्रुत्य हिपि २२ : ८.

उप-सं√सृप्, उपसंसर्पति बौश्रौ १७,३५ : २.

उप-सं√स्पृश् > उपसं-स्पृश्य आग्निगृ १,६,१ : २९.

उपसं-स्पृष्ट- -ष्टे बौश्रौ ७, २ : ९.

उप-सं√हन् > उपसं-हत्य बौश्रौ २०,२६ : १४.

उप-सं√हृ, उपसंहरति काशु ३, १; तैप्रा २, १८; ३२; उपसंहरन्ति आग्निगृ ३,८,१ : २४; बौपि १, १५ : २; उपसंहरेत् आपशु २, ९××; काशु.

उपसं-हार[d]- -रः तैप्रा २,३१.

उपसं-हृ(त>)ता- -ता आपशु २, १२; हिशु १,३२.

उपसंहृत-तर,रा- -रे तैप्रा २, १६;१८; -रौ तैप्रा २. १४.

उपसं-हृत्य आग्निगृ ३,५,४ : ६××; बौपि.

उप-सं√कुच् > उपसं-कुच्य वैश्रौ ६, १२ : ४.

उप-सं√क्रम्, उपसंक्रामतः बौश्रौ ६,१६ : ९;२५ : ४; वैश्रौ १२, २० : १२; उपसंक्रामन्ति बौश्रौ १५, २० : ५.

†उपसंक्रमे, उप(संक्रमे) कौसू ८९,१०.

उपसं-क्रमण- ( > औपसं°- पा. )

पाग ५,१,९७.

उपसं-क्रम्य गोगृ ३,४, ३०.

उप-सं√ख्या, उपसंख्यायते वाधूश्रौ ३. ७६ : १५; निसू ५, ११ : २९; ७, ५ : ३३; पावा ४, ३, १२१.

उपसं-ख्यान- -नम् पावा १,१,२९; ३६××; ३,२,१३९[e];५,१,३९[e]; ४७[e]; -नात् पावा ८,२,८८.

उपसंख्यान-ग्रहण- -णम् पावा १,१,३६.

उपसंख्याना( न-आ )नर्थक्य- -क्यम् पावा १,१,२९.

उप-सं√गच्छ्, गम्, उपसंगच्छन्ते बौश्रौ २, १४ : २; ७, १ : ५; ११, ९ : १०; १५, ३ : २; १३ : १४; १८,१८ : ७; २० : ११.

उपसं-गम्य अप ६९,१,१.

उप-सं√गृह्,ग्रह्, उपसंगृह्णीते हिश्रौ ५, ४, ६०; ६७[f]; उपसंगृह्णाति बौश्रौ ६, १९ : १९; २१ : २०; उपसंगृह्णीयात् बौश्रौ २५.१७ : १८; माश्रौ.

उपसंजिघृक्षेत् आपध १, ८,१९; हिध १,२,१०७.

उपसं-गृह्नत्- -ह्नन् वैध २,१०,७.

उपसं-गृह्य आश्रौ ८, १४, १४; आपश्रौ; हिध २,१,८७[f].

उपसं-ग्रहण- -णम् आपध १, ५, १८; १०,१७; १४,९; हिध १, २, १९; ३,४४; ४, ४१; गौध २,४०; ६,८; -णात् आपध १, ७, २७; हिध १, २, ८४; -णे बौगृ २, ११,४८.

उपसं-ग्राहम् बौश्रौ ६, १३ : ८;

*a*) वैप १ द्र. । *b*) वैप १,९४३ b द्र. । *c*) पाभे. वैप १, ९३५ j द्र. । *d*) =संश्लेष-विशेष- (तु. भाष्यम्)। *e*) तु. पाका. । *f*) सपा. आपध २,५,६ अनुगृह्य इति पाभे. ।

